# अंजनप्रतिष्ठायां पूजामंडपे पूजावेधहवादि विषये























ॐ

## श्रीगणेशाय नमः ।

अथ सांवत्सरिकश्राद्धविधिः ॥ आदौ शालिचूर्णेन ब्रह्मकलशमुल्लिख्य ॥ अभिनो देवी०—वषट् ते विष्णो०—तावत् ॥ प्रदानानि ॥ अग्नये नमः, वायवे नमः, सूर्याय नमः, ब्रह्मणे नमः, प्रजापतये नमः, कूष्मर्षिभ्यः नमः ॥ १ ॥ अग्निना रयिमश्नवत्पोषमिव दिवेदिवे । यशसं वीर  । नमः ॥ प्रजापते नहि त्वदन्य एता विश्वा जातानि परिता बभूव । यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम् नमः ॥ २ ॥ उदग्ने शुचयस्तव शुक्र भ्राजन्त ईरते । तव ज्योतींष्यर्चय नमः ॥

अग्ने पवस्व स्वपा अस्मे वर्चः सुवीर्यम् । दधद्रयिं मयि पोषम् नमः ॥ त्वं नस्तन्तुरुत सेतुरग्ने त्वं पन्था भवसि देवयानैः । त्वयाग्ने पृष्ठं वयमारुहेमाऽथा देवैः सदमादं मदेम नमः ॥ अग्ने नय सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान् । युयोध्यस्मज्जुहुराणमेनो भूयिष्ठान्ते नम उक्तिं विधेम नमः ॥ ३ ॥ अष्टकाप्रधानम् ॥ ऋतूनां पत्नी प्रथमेयमगादह्नां नेत्री जनित्री प्रजानाम् । एका सती बहुधोषो व्युच्छा जीर्णा त्वं जरय सर्वमन्यत् नमः ॥ ऋतस्य धामा प्रथमा व्युषस्यऽपामेका महिमानं बिभर्ति । सूर्यस्यैका चरति निष्कृतानि घर्मस्यैका सवितैका नियच्छति नमः ॥ देवा ग्रावाणो घोषमक्रत हविष्कृण्वन्तः परिवत्सरीयम् ।

एकाष्टके सुप्रजसः सुवीरा ज्योग्जीवेम बहिहृतो वयं ते नमः ॥ ४ ॥ तद्विष्णोः परमं पदं सदा पश्यंति सूरयः । दिवीव चक्षुराततम् ॥ तद्विप्रासो विपण्यवो जागृवांसः समिन्धते । विष्णोर्यत्परमं पदम् नमः ॥ वासुदेवाय नमः० ८, लक्ष्मीसहिताय नारायणाय नमः ॥ यो रुद्रो अग्नौ यो अप्सु य ओषधीषु यो वनस्पतिषु । यो रुद्रो विश्वा भुवना विवेश तस्मै रुद्राय नमो अस्तु देवाः नमः ॥ भवायदेवाय नमः० ८, पार्वतीसहिताय परमेश्वराय नमः ॥ गणानान्त्वा गणपतिं हवामहे कविंकवीनामुपमश्रवस्तमम् । ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आनः शृण्वन्नूतिभिः सीद सादनं नमः ॥ विनायकाय नमः० ८, वल्लभासहिताय श्रीमहागणेशाय नमः ॥

चित्रन्देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः । आ प्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च नमः ॥ ह्रांह्रींसःसूर्याय नमः० ८, प्रभासहिताय आदित्याय नमः ॥ जातवेदसे सुनवाम सोममरती यतो निदहाति वेदः । स नस्पर्शदऽतिदुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निर्नमः ॥ भगवत्यै अमायै नमः० ८, सहस्रनाम्नै देव्यै भवान्यै नमः ॥ विष्णुपञ्चायतनदेवताभ्योनमः, यत इन्द्र भयामहे ततो नो अभयंकृधि । मघवञ्छग्धि तव तन्न ऊतिभिर्विद्विषो विमृधो जहि नमः ॥ अभयङ्करीदेव्यै नमः,क्षेमङ्करीभवान्यै नमः सर्वशत्रुघातिन्यै नमः इह राष्ट्राधिपतये अमुकभैरवाय नमः, महागायत्र्यै नमः सावित्र्यै नमः सरस्वत्यै नमः ॥ क्षेत्रस्य पतिना

वयं हितेनेव जयामसि । गामश्वं पोषयित्वा स नो मृळातीदृशे नमः, हेरकादिभ्यो नमः । वटुकादिभ्यो नमः ॥ यौ ते श्वानौ० । अमृतेशमुद्रया० हिरण्यगर्भः० । ८ । अर्चन्तस्त्वा० ॥ यजमानमानीय ॥ अस्य श्री आसनशोधनमन्त्रस्य० ॥ शुक्लाम्बरधरं० । अनाभौ० । अपसर्पंतु० ॥ तीर्थे स्नेयं तीर्थमेव समानानां भवति मानः शंस्योररुषो धूर्त्तिः प्राणङ् मर्त्यस्य रक्षाणो ब्रह्मणस्पते ॥ वसोः पवित्रमसि शतधारं वसूनां पवित्रमसि सहस्रधारमयक्ष्मा वः प्रजया संसृजामि रायस्पोषेण बहुलाभवन्तीः ॥ परमात्मने पुरुषोत्तमाय पञ्चभूतात्मकाय विश्वात्मने मन्त्रनाथाय आत्मने नारायणाय आधारशक्त्यै समालभन्नं गन्धो नमः अर्घो नमः पुष्पं नमः ॥ स्व-

प्रकाशो महादीपः सर्वतस्तिमिरापहः । प्रसीद मम गोविन्द दीपोयं परिकल्पितः ॥ वनस्पतिरसो दिव्यो गन्धाढ्यो गन्धवत्तमः । आधारः सर्वदेवानां धूपोयं परिकल्पितः ॥ नमो धर्मनिधानाय नमः स्वकृत साक्षिणे । नमः प्रत्यक्षदेवाय भास्कराय नमो नमः ॥ यत्रास्ति माता न पिता न बन्धुर्भ्रातापि नो यत्र सुहृज्जनश्च । न ज्ञायते यत्र दिनं न रात्रिस्तत्रात्मदीपं शरणं प्रपद्ये । आत्मने नारायणाय आधारशक्त्यै दीपधूपसंकल्पात्सिद्धिरस्तु दीपोनमः धूपोनमः ॥ ओं तत्सद्ब्रह्म० महागणपतये कुमाराय श्रियै सरस्वत्यै लक्ष्म्यै विश्वकर्मणे द्वार्देवताभ्यः । प्रजापतये ब्रह्मणे कलशदेवताभ्यः ब्रह्मविष्णुमहेश्वरदेवताभ्यः चातुर्वेदेश्वराय सानुचराय ऋतुपतयेनारायणाय । दुर्गायै त्र्यम्बकाय

वरुणाय यज्ञपुरुषाय अग्निष्वात्तादिभ्यः पितृगणाया-
गदेवताभ्यः अग्नये वायवे सूर्याय ब्रह्मणे प्रजापतये कू-
ष्माण्डेभ्यः अग्नये पुष्टिपतये प्रजापतये । अग्नये शुचये
अग्नये पवमानाय अग्नये तन्तुमते अग्नये पथिकृते अ-
ग्नये अष्टकादेवतायै ।। भगवते वासुदेवाय० ८ भवाय-
देवाय० ८ विनायकाय० ८ ह्रांहीसःसूर्याय०८ अमा-
यै० ८ विष्णुपञ्चायतनदेवताभ्यः ।। अभयंकरीदेव्यै०
हेरकादिभ्यः० दीपधूपसङ्कल्पात्सिद्धिरस्तु० ।। अपस-
व्येन ।। नमः पितृभ्यः प्रेतेभ्यो नमो धर्माय विष्णवे ।
नमो यमाय रुद्राय कान्तारपतये नमः ३ ।। देवताभ्यः
पितृभ्यश्च महायोगिभ्य एवच । नमः स्वधा च स्वाहा
च नित्यमेव भवन्त्विह ।। तत्सद्ब्रह्माऽद्य तावत् पित्रे०
समस्तमातापितृभ्यो० दीपःस्वधा धूपःस्वधा ।। तत्स-

द्ब्रह्माऽद्य० । पित्रे वा मात्रे सांवत्सरिके श्राद्धे दीपःस्व-
धा० ॥ सव्येन ॥ गायत्र्यै नमः । ॐभूर्भुवःस्वः० ३ ॥
तत्सद्ब्रह्माद्यतावत्० । महागणपतेः कुमारस्य श्रियः
सरस्वत्याः लक्ष्म्याः विश्वकर्मणः द्वार्देवतानां प्रजाप-
तेः ब्रह्मणः कलशदेवतानां ब्रह्मविष्णुमहेश्वरदेवतानां
चातुर्वेदेश्वरस्य सानुचरस्य ऋतुपतेर्नारायणस्य दुर्गा-
याः त्र्यम्बकस्य वरुणस्य यज्ञपुरुषस्य अग्निष्वात्तादी-
नां पितृगणदेवतानां अग्नेः वायोः सूर्यस्य ब्रह्मणः प्र-
जापतेः कृष्मर्षीणां अग्नेः पुष्टिपतेः प्रजापतेः अग्नेः शु-
चेः अग्नेः पवमानस्य अग्नेः तन्तुमतः अग्नेः पथिकृतः
अग्नेः अष्टकादेवतायाः ॥ वासुदेवस्य० भवस्यदेवस्य०
विनायकस्य० हांहींसःसूर्यस्य० भगवत्याः अमायाः०
विष्णुपञ्चायतनदेवतानां । अभयङ्करीदेव्याः० महा-

गायत्र्याः० हेरुकादीनां० आत्मनो० पितुः पितामह-स्य प्रपितामहस्य, पितुः । वा मातुः पितामह्याः, प्रपितामह्याः, मातुः, सांवत्सारके श्राद्धे तेषां वा तासां परलोके विष्णुसायुज्यार्थं, आत्मनश्चतुर्वर्ग-प्राप्त्यर्थं कलशपूजनं देवेश्वरपूजनमर्चामहं करिष्ये. ओं कुरुष्व ॥ तिलसर्षपयवान् विकीर्य ॥ महागणपतेः, इत्यादीनामिदमासनं नमः ॥ महागणपतये कुमा-राय श्रियै सरस्वत्यै लक्ष्म्यै विश्वकर्मणे द्वार्देवता-भ्यः प्रजापतये ब्रह्मणे कलशदेवताभ्यः ब्रह्मविष्णु-महेश्वरदेवताभ्यः चातुर्वेदेश्वराय सानुचराय ऋतु-पतये नारायणाय दुर्गायै त्र्यम्बकाय वरुणाय यज्ञ-पुरुषाय अग्निष्वात्तादिभ्यः पितृगणदेवताभ्यः । अग्नये वायवे सूर्याय ब्रह्मणे प्रजापतये कूष्मर्षिभ्यः

अग्नये पुष्टिपतये प्रजापतये अग्नये शुचये अग्नये पवमानाय अग्नये तन्तुमते अग्नये पथिकृते अग्नये अष्टकादेवतायै वासुदेवाय० ८ भवायदेवाय० ८ विनायकाय० ८ ह्रांह्रींसः सूर्याय० ८ भगवत्यै अम्बायै:० ८ विष्णुपञ्चायतनदेवताभ्यः । अभयङ्करीदेव्यै क्षेमङ्करीभवान्यै सर्वशत्रुघातिन्यै इहराष्ट्राधिपतये अमुकभैरवाय महागायत्र्यै सावित्र्यै सरस्वत्यै हेरका० युष्मान् वः पूजयामि ओं पूजय ॥ महागणपतिं कुमारं श्रियं सरस्वतीं लक्ष्मीं विश्वकर्माणं द्वार्देवताः प्रजापतिं ब्रह्माणं कलशदेवताः ब्रह्मविष्णुमहेश्वरदेवताः चातुर्वेदेश्वरं सानुचरं ऋतुपतिं नारायणं दुर्गां त्र्यम्बकं वरुणं यज्ञपुरुषं अग्निश्वात्तादीः पितृगणदेवताः अग्निं वायुं सूर्यं ब्रह्माणं प्रजापतिं कूष्मर्षीन् अग्निं पुष्टि-

पतिं प्रजापतिं अग्निं शुचिं अग्निं पवमानं अग्निं तन्तुमतं अग्निं पथिकृतं अग्निं अष्टकादेवतां वासुदेवं० ८ भवंदेवं० ८ विनायकं० ८ ह्रांह्रींसःसूर्यं० ८ भगवतीं अम्बां० ८ विष्णुपञ्चायतनदेवताः आवाहयिष्यामि ओं आवाहय ॥ यवान्विकीर्य ॥ पाद्यार्थमुदकं नमः ॥ शन्नोदेवीरभीष्टय आपो भवन्तु पीतये । शं य्योरभि स्रवन्तु नः ॥ लाजाश्च कुंकुमं चैव सर्वौषधिसमन्वितम् । दर्भाङ्कुरं जलं चेति पञ्चाङ्गं पाद्यलक्षणम् ॥ भगवन्तः पाद्यम् पाद्यम् ॥ महागणपतये०—इत्यादिभ्यः पाद्यंनमः । पाद्यशेषं निवारयेत् ॥ पुनः । शन्नो देवी० ॥ आपः क्षीरं कुशाग्राणि घृतं च दधि तण्डुलाः । यवाः सिद्धार्थकाश्चेति ह्यर्घ्यमष्टाङ्गमुच्यते ॥ भगवन्तः अर्घ्यमर्घ्यम् ॥ महागण-

पते कुमार श्रीः सरस्वति लक्ष्मीः विश्वकर्मन् द्वा-
र्देवताः प्रजापते ब्रह्मन् कलशदेवताः ब्रह्मविष्णु-
महेश्वरदेवताः चातुर्वेदेश्वर सानुचर ऋतुपते नारा-
यण दुर्गे त्र्यम्बक वरुण यज्ञपुरुष अग्निष्वात्तादयः
पितृगणदेवताः अग्ने वायो सूर्य ब्रह्मन् प्रजापते
कूष्मर्षयः अग्ने पुष्टिपते प्रजापते अग्ने शुचे अग्ने
पवमान अग्ने तन्तुमत् अग्ने पथिकृत् अग्ने अष्टका-
देवते । वासुदेव० ८ भवदेव० ८ विनायक० ८ ह्रां-
ह्रीसःसूर्य० ८ भगवति अम्बे० ८ विष्णुपञ्चायतनदे-
वताः अभयङ्करीदेवि क्षेमङ्करीभवानि सर्वशत्रुघाति-
नि इह राष्ट्राधिपते अमुकभैरव महागायत्रि सावि-
त्रि सरस्वति हेरुकादयो वटुकादयः इदं वोऽर्घ्यं
नमः ॥ महागणपतये० इत्यादिभ्यः समालभनं

गन्धो नमः ॥ गन्धलेपं निवारयेत् ॥ महागणपतये० इत्यादिभ्यः अर्घो नमः पुष्पं नमः । महागणपतये० दीपधूपसंकल्पात्तिसिद्धिरस्तु दीपो नमः धूपो नमः ॥ महागणपतये० वासो नमः ॥ एतासां देवतानामर्घ्यदानाद्यर्चनविधिः सर्वः परिपूर्णोऽस्तु ॥ अन्नं नमः २ आज्यं २ अद्यदिने अद्य यथासंकल्पात्तिसिद्धिरस्तु अन्नहीनं क्रियाहीनं विधिहीनं द्रव्यहीनं मन्त्रहीनं च यद्गतं तत्सर्वमच्छिद्रं सम्पूर्णमस्तु एवमस्तु ॥ शन्नोदेवी० ॥ महागणपतये० अपोशानं नमः आचमनीयं नमः ॥ पुनः, शन्नोदेवी० ॥ महागणपतये० दक्षिणायै तिलहिरण्यरजतनिष्कर्णं ददानि ॥ अपसव्येन ॥ ओं तत्सद्ब्रह्म अद्यतावत्० पितुः पितामहस्य प्रपितामहस्य पितुः "वा" मातुः पितामह्याः प्रपितामह्याः मातुः सांव-

त्सरिके श्राद्धे तेषां "वा" तासां परलोके वैकुण्ठपदवी-प्राप्त्यर्थं कलशप्रीत्या तिलाम्भसा पुण्यवृद्धिरस्तु स्वर्गप्राप्तिरस्तु इदं तृप्तयेऽस्तु कलशदेवताः प्रियन्तां प्रीताः सन्तु ॥ सव्येन ॥ क्षेत्रेश्वराः प्रियन्तां प्रीताः सन्तु ॥ एता देवताः सदक्षिणान्नेन प्रियन्तां प्रीताः सन्तु ॥ तद्विष्णोः० इति कलशे पुष्पद्वयम् ॥ अथ व्याहृतिपूर्वकं वैश्वदेवं नित्यकर्म ॥ शालिचूर्णेनाऽग्निकुण्डमुल्लिख्य ॥ पात्रं तिलाक्षतैर्मिश्रं० ॥ संव्वः सृजामीति द्वाभ्यां पुष्पाणां त्रितयं क्षिपेत् ॥ निर्दग्धं रक्षो० ॥ प्राणायामं कुर्यात् ॥ ऋतन्त्वा सत्येनाग्निं परिसमूहामि ॥ ६ ॥ यज्ञस्य० ॥ पुरस्तात्० ॥ ४ ॥ इदं हविः प्रजननं मेऽस्तु दशवीरं० ॥ यथावकाशं गायत्रीब्राह्मणहोमः ॥ संक्षेपतो यथा ॥ मुक्ताविद्रुमहेम ० ॥ आयातु वरदा ० ३ ॥ महाव्याहृतयः प्रजापतेः । ॐअग्नये स्वाहा ॐभूः स्वाहा

ॐभुवः स्वाहा ॐस्वः स्वाहा ॐभूर्भुवःस्वः स्वाहा ॥ ॐभूः स्वाहा ॐभुवः स्वाहा ॐस्वः स्वाहा ॐमहः स्वाहा ॐजनः स्वाहा ॐतपः स्वाहा ॐसत्यं स्वाहा ॥ ओंतत्सवितुर्व० ३ ॥ अश्वमेधे घोराणामार्षम् ॥ द्रष्ट्रे नम० ॥ यो विश्वचक्षु० ॥ आ ब्रह्मन् ब्रह्मणो० ॥ चतुर्भुजामर्कसहस्र० ॥ देवाश्च वा असुराश्च संयत्ता आसंस्तान्गायत्र्यन्तरातिष्ठदोजो वै वीर्यमन्नाद्यं परिगृह्य संवत्सरो वा वैनान्सोऽन्तरातिष्ठच्चतुर्विंशति गायत्र्या अक्षराणि चतुर्विंशति संवत्सरस्यार्धमासास्ते विदुर्यतरान्वा इयमुपवत्स्यति त इदं भविष्यति तं व्याह्वयन्तदाभीत्यसुरा आह्वयन्विश्वकर्मन्निति देवास्मान् यतरांश्च नोपवर्तत ते देवा एतद्यजुरपश्यन्नोजोसि सहोसि बलमसि भ्राजोसि देवानान्धाम नामासि विश्वमसि विश्वायुः सर्वमसि सर्वायुरभिभूरिति

स देवानुपावर्तत, ततो देवा अभवन् पराऽसुरा अभव-न्नाग्नेय्यमष्टाकपालं निर्वपेद्भ्रातृव्यवान् वा स्पर्धमानो वा तमासाध्यैतैर्ऋजुरभिमृशेदोजो वै वीर्यं संवत्सर ओज एव वीर्यं भ्रातृव्यस्य वृंक्ते स निर्वीर्यः पराभव-ति सैषा गायत्री नामेष्टिरथो आहुः चेत्रस्य संवर्ग इति महागायत्र्यैस्वाहा, सावित्र्यैस्वाहा, सरस्वत्यैस्वाहा अनेन मन्त्रहोमेन आत्म० पितुः० वा मातुः० सां-वत्सरिके श्राद्धे तेषां वा तासां परलोके० महागा-यत्री सावित्री सरस्वती सव्याहृतिः प्रियतां प्रीतास्तु ॥ अध्वर्योयं० ॥ ध्येयः सदा० ॥ सहस्रशीर्षा० हि-रण्यवर्णां हरिणीं०। तद्विष्णोः प० विष्णुपश्चाय-तनदेवताभ्यः० वटुकादिभ्यः स्वाहा ॥ यौ ते श्वानौ०। ऐन्द्राग्नं०। अनेन मंत्रहोमेन० महागणपतिः कुमारः श्रीः सरस्वती लक्ष्मीः विश्वकर्मा द्वार्देवताः प्रजापतिः

ब्रह्मा कलशदेवताः ब्रह्मविष्णुमहेश्वरदेवताः चातुर्वेदेश्वरः सानुचरः ऋतुपतिर्नारायणः दुर्गा त्र्यम्बकः वरुणः यज्ञपुरुषः अग्निष्वात्तादयः पितृगणदेवताः वासुदेवः० भवोदेवः० विनायकः० हांह्रींसः सूर्यः० भगवती अमा० विष्णुपञ्चायतनदेवताः अभयङ्करीदेवी क्षेमङ्करीभवानी सर्वशत्रुघातिनी इह राष्ट्राधिपतिः अमुकभैरवः महागायत्री सावित्री सरस्वती हेरकादयो वटुकादयो यवतिलतण्डुलहोमेन प्रियन्तां प्रीताः सन्तु ॥ अथ वैश्वदेवम् ॥ वैश्वदेवस्य सिद्धस्य सर्वतोग्रचस्याऽन्नस्य जुहोतिपाकस्य घृतेन संलिप्य स्वस्त्यस्तु शृतमभिघार्य ॥ अग्नये स्वाहेत्युत्तरतः सोमाय स्वाहेति दक्षिणतः । तयोर्मध्ये । मित्रय स्वाहा, वरुणाय, इन्द्राय, इन्द्राग्निभ्यां, विश्वेभ्योदेवेभ्यः, प्रजापतये, अनुमत्यै, धान्वन्तरये, वास्तोष्पतये,

वासुदेवाय, सङ्कर्षणाय, प्रद्युम्नाय, अनिरुद्धाय, सत्यपुरुषाय, अच्युताय, माधवाय, गोविन्दाय, सहस्रनाम्ने विष्णवे, लक्ष्मीसहिताय नारायणाय स्वाहा ॥ अमृतेशमुद्रया० नित्यकर्मयागदेवताभ्यो नमोनैवेद्यं निवेदयामि नमः ॥ पूर्वाग्रान्दर्भानास्तीर्य ॥ तक्षाय नमः, उपतक्षाय, अभ्यानामासि नमस्ते, दुलानामा०, नितत्नीनामा०, चुपनीकाना०, अभ्रयन्तीना०, मेघयन्तीना०, वर्षयन्तीना०, नन्दिनि नमस्ते, सुभगे न०, सुमङ्गले न०, भद्रङ्करि० श्रियैहिरण्यकेश्यै नमः, वनस्पतिभ्यो०, धर्माय०, अधर्माय०, मृत्यवे०, मरुद्भ्यो०, वरुणाय०, विष्णवे०, वैश्रवणायराज्ञे०, भूतेभ्यो० इन्द्राय०, इन्द्रपुरुषेभ्यो०, यमाय०, यमपुरुषेभ्यो सोमाय०, सोमपुरुषेभ्यो०, वरुणाय०, वरुणपुरुष-

भ्यो०, ब्रह्मणे०, ब्रह्मपुरुषेभ्यो०, ऊर्ध्वं आकाशाय०, स्थण्डिले दिवाचरेभ्यो भूतेभ्यो०, नक्तञ्चरेभ्यो भूतेभ्यो नमः। तद्वादिभ्यः षट्त्रिंशद्देवताभ्योऽन्नं नमः, आचमनीयं नमः। अपसव्येन। दक्षिणाग्रान्दर्भानास्तीर्य समस्तमातापितृभ्यो द्वादशदैवतेभ्यः पितृभ्यो भूपृष्टे दर्भास्तरणे तिलोदकेनाऽवनेजनंस्वधा॥ उशन्तस्त्वा हवामह उशन्तः समिधीमहि। उशन्नुशत आवह पितॄन्हविषे अत्तवे॥ तिलास्तोयं तथा क्षीरं दीपधूपौ बलिस्तथा। मधु सर्पिःसमायुक्तमष्टाङ्गमन्नसम्भवम्॥ देवताभ्यः पितृभ्यश्च महायोगिभ्य एवच। नमः स्वधा च स्वाहा च नित्यमेव भवन्त्विह॥ ३॥ अद्यतावत् पितः अमुकाऽमुकगोत्र एतत्तेऽन्नं येच त्वाऽनु। पितामह० प्रपितामह०॥ मातः एतत्तेऽन्नं याश्च त्वाऽनु। पिता-

महि० ॥ प्रपितामहि० ॥ मातामह प्रमातामह वृद्धप्रमातामह । मातामहि प्रमातामहि वृद्धप्रमातामहि। एवमन्ये च पितरः। मातृपक्षास्तु ये केचिद्ये चान्ये पितृपक्षजाः । गुरुश्वशुरबन्धूनां ये कुलेषु समुद्भवाः । ये प्रेतभावमापन्ना ये चान्ये श्राद्धवर्जिताः । अन्नदानेन ते सर्वे लभन्तां तृप्तिमुत्तमाम् ॥ समस्तमातापितृभ्यो द्वा० अन्नंस्वधा, अन्नलेपं निवारयेत् । समस्तमा० समालभनं गन्धः स्वधा, अर्घः स्वधा पुष्पं स्वधा, दीपः स्वधा, धूपः स्वधा । समस्त० भक्ष्यभोज्यफलमूलबलिनैवेद्यमाहाराद्यऽन्नं स्वधा । समस्त० तिलमधुमिश्रमुदकपात्रमाचमनीयं जलं स्वधा । सम० हिमपानं स्वधा । क्षीरपानं स्वधा मधुपानं स्वधा तिलोदकं स्वधा उदकतर्पणं स्वधा हिमंहिमं रजतं रजतम् ॥ सव्येन ॥ वसन्ताय नमः

ग्रीष्माय नमः वर्षाभ्यो नमः शरदे नमः हेमन्ताय नमः शिशिरायनमः षड्तुभ्यो नमः ॥ अग्नये स्विष्टकृते स्वाहा। हस्तौ प्रक्षाल्य। प्राणायामं। विमुञ्चामि ३ नयामि ॥ भगवन्यक्ष्म एतत्तेऽन्नं नमः। भग० एतत्ते आचमनीयं नमः ॥ कण्ठोपवीती ॥ हन्तमनुष्येभ्यः सनकादिभ्य ऋषिभ्योऽन्नं नमः सनका० आचमनीयं नमः। सव्येन ॥ अथाऽष्टकाविधिः। पुनरग्निं परिसमूह्य ६ आदौ पञ्च० । अपूपचरौ ॥ अग्नये वायवे सूर्याय ब्रह्मणे प्रजापतये कूष्मर्षिभ्यः जुष्टं निर्वपामि । अक्षतचरौ ॥ अग्नये पुष्टिपतये प्रजापतये ॥ अपूपचरौ ॥ अग्नये शुचये अग्नये पवमानाय अग्नये तन्तुमते अग्नये पथिकृते ॥ अपूपचरौ ॥ अग्नये अष्टकादेवतायै जुष्टं निर्वपामि ॥ एवं प्रोक्षामि आज्यभागान्तं हुत्वा ॥ कूष्माण्डं तद्ब्राह्मणं

च हुत्वा ॥ प्रधानानि । तेजोसि । अ० वा० सू० प्र० प्र० कू० । स्रुवेणाज्यहोमः । अग्नये जनिविदे स्वाहा, सोमाय ज०, गन्धर्वाय ज०, आयुषः प्राणमित्येका० । ते० । आकूतामति त्रयो आकूतं चाऽकूतिश्चाऽऽधीतं चाधीतिश्च विज्ञातं च विज्ञातिश्च चित्तं च चित्तिश्च नाम च क्रतुश्च दार्शश्च पौर्णमासश्च प्रजापतिर्जयानिद्राय-वृष्णे प्रायच्छदुग्रः पृतनाज्येषु । तेभिर्वाजं वाजयन्तो जयेम तेनेमा विश्वाः पृतना अभिष्याम स्वाहा ॥ ते० ॥ बृहस्पतिपुरोहिता इत्यभ्यातानां देवानाम् ॥ बृहस्पतिपुरोहिता देवा देवानां देवा देवाः प्रथमजा देवा देवेषु पराक्रमध्वम् । प्रथमा द्वितीयेषु द्वितीयास्तृतीयेषु त्रिरेकादशास्त्रयस्त्रिंशा अनु व आरभे इदं शकेयं यदिदं करोमि तेमावत तेमाजिन्वताऽस्मिन्ब्रह्मण्यस्मिन्क्षेत्रेऽस्यामाशिष्यस्यां पुरोधायामस्यां देवहूत्यां

स्वाहा ॥ स्रुवेणाज्यहोमः । ऋताषाडिति त्रयोदशाहुती-र्हुत्वा ॥ अग्निर्भूतानामित्येकविंशमाधिपत्यानि जुहोति । अग्निर्भूतानामधिपतिः स माऽवतु तस्मै स्वाहा १ यमः पृथिव्यास० २ वायुरन्तरिक्षस्याधि० ३ सूर्यो दि-वोऽधि० ४ चन्द्रमा नक्षत्राणाम० ५ विष्णुर्दिशा-नाम० ६ पूषा पथीनाम० ७ त्वष्टा रूपाणाम० ८ सविता प्रसवानाम० ९ इन्द्रो ज्येष्ठाणाम० १० मित्रः सत्यानाम० ११ वरुणो धर्माणाम० १२ रुद्रः पशूनाम० १३ बृहस्पतिर्ब्रह्मणाम० १४ ब्रा-ह्मणो वाचाम० १५ सोम ओषधीनाम० १६ स-मुद्रः स्रवन्तीनाम० १७ अन्नं सम्राज्यानामधिपति तन्माऽवतु तस्मै स्वाहा १८ गायत्री च्छन्दसाम-धिपत्नी सा माऽवतु तस्यै स्वाहा १९ मरुतो गणानामधिपतयस्ते माऽवन्तुतेभ्यः स्वाहा २०

पितरः पितामहाः परावरेभ्यस्ते माऽवन्त्वऽस्मिन्ब्रह्मण्यस्मिन्क्षत्रेऽस्यामाशिष्यऽस्यां पुरोधायामस्यां देवहूत्यां स्वाहा २१ आकूत्यै त्वा स्वाहा, कामाय त्वा स्वाहा, समृद्ध्यै त्वा स्वाहा ॥ हिरण्यगर्भ इत्यष्टाभिः ॥ हिरण्यगर्भः १ यः प्राणतो २ य ओजोदः ३ येन द्यौ ४ य इमे ५ यस्येमे ६ आपो ह यन् ७ आ नः प्रजां ८ ओंभूःस्वाहा ओं भुवः, ओंस्वः, ओंभूर्भुवःस्वः० । अग्न आयूंषि०, अग्निर्ऋषि०, अग्ने पवस्व०, ॥ ततोऽन्नतचरौ । प्रधानानि। अग्निं पुष्टिपतिं प्रजापतिं च यजेत ॥ ते० । अग्निना रयिं० प्रजापते नहि० । तृतीयचरौ । उदग्ने शुचयस्तव० । अग्ने पवस्व० । त्वं नस्तन्तु० । अग्ने नय० ॥ अष्टकाप्रधानं । ते० । ऋतूनां पती०, ऋतस्य धामा०, देवा ग्रावाणो० ॥ अष्टकानुवाकौ तूष्णा-

नामार्षम् ॥ इयमेव सा या प्रथमा व्यौच्छत्सा वा स्वन्तश्चरति प्रविष्टा । वधूर्मिमाय नवगाज्जनित्री त्रय एनां महिमानः सचन्ते १ छन्दस्वतीरुषसौ पेपिशाने समानं योनिमनु सञ्चरन्ती । सूर्यपत्नी विचरतः प्रजानती केतुमती अजरे भूरिरेतसः २ ऋतस्य पन्थामनु तिस्र आघुस्त्रयो घर्मासो अनुरेतसाऽगुः । प्रजामेका रक्षत्यूर्जमेका व्रतमेका रक्षति देवयूनाम् ३ चतुष्टोममऽदधाद्या तुरीयां यज्ञस्य पक्षा ऋषयो भवन्ती । गायत्री त्रिष्टुब्जगती विराडर्कं युञ्जाना सुराभन्निदम् ४ पञ्चभिर्धाता विदधा इदं यत्तासांस्वसृरजनत्पञ्च पञ्च । तासामयन्ति प्रयवेन पञ्च नानारूपाणि ऋतवो वसानाः स्वाहा ५ ॥ ऋतुतिथिन० ॥ नैवेद्यम् । ते० । इळामग्ने०, अग्ने त्वं पारयेति च ॥ इळाभागं हुत्वा । वैश्वानरेणेति,

पावमान्यब्राह्मणेन चेत्युपस्थाय ॥ यद्देवा देवहेळनं यद्वाचा०— सौत्रामण्या निचाङ्कुणस्य तावत् इत्यञ्जलिः ॥ पुनर्वैश्वानैरायेति पावमानीब्राह्मणेन च तर्पणं कृत्वा । अनेन मन्त्रहोमेण० पितुर्वा मातुः सांव० अग्निः प्रीयतां अग्निः प्रीतोस्तु० ॥ हुतमेत्तणम् । ब्राह्मणपूजनम् । दक्षिणान्तं । अपसव्येन। अद्यतावत्० पितुः अष्टकाप्रीत्या तिलाम्भसा अष्टकादेवता प्रीयतां प्रीतास्तु सव्येन । ओंगायत्र्यैनमः ३ अच्छिद्रं पूर्ववत् ॥आश्रावितमिति पूर्णाहुतिः त्र्यायुषं० । विमुच्य ३ नयामि ॥ पुनरग्निं परिसमूह्य, पर्युक्ष्य ६ ॥ इत्यष्टकाविधिः । अथ श्राद्धविधिः श्राद्धारम्भे तथाचान्ते पाद्यगन्धे तथैवच । विकिरे पिण्डदाने च षट्सु त्वाऽचमनं स्मृतम् ॥ पृच्छासनाऽक्षये षष्ठी प्रथमा चार्घ्यपिण्डयोः । द्वितीयाऽऽवाहने प्रोक्ता चतुर्थी शेषकर्मणि ॥ पवित्रं विनाऽऽचम्य ॥

श्राद्धकाले गयां ध्यात्वा ध्यात्वा देवं गदाधरम् ।
स्वान्पितॄन्मनसा ध्यात्वा पश्चाच्छ्राद्धं समारभेत् ॥
गायत्र्यैनमः ओंभूर्भुवःस्वः ३ अपसव्येन । देवताभ्यः
पितृ० ३ अद्यतावत्० पितुः पितामहस्य प्रपिताम-
हस्य पितुः वा मातुः पितामह्याः प्रपितामह्याः मातुः
सांवत्सरिकं श्राद्धं त्रैपुरुषं वैश्वदेवाष्टकापूर्वकं ब्रा-
ह्मणपूजनमर्चामहं करिष्ये ओंकुरुष्व ॥ अग्निं परि-
समूह्य ६ तिलान्विकीर्य । निहन्मि सर्वं यदऽमेध्य-
वद्भवेद्भूताश्च सर्वेऽसुरदानवा मया । रक्षांसि यक्षा
सपिशाचगुह्यका हता मया यातुधानाश्च सर्वे ॥
सव्येन ॥ विश्वेषान्देवानामिदमासनंनमः । विश्वेभ्यो
देवेभ्यो ब्राह्मणं त्वा भोजयामि ओंभोजय । विश्वा-
न्देवानावाहयिष्यामि ओमावाहय । यवान्विकीर्य ॥
आगच्छन्तु महाभागा विश्वेदेवा वरप्रदाः । ये येऽत्र

विहिताः श्राद्धे सावधाना भवन्तु ते ॥ शन्नो देवी० । लाजाश्च० ॥ भगवन्तः पाद्यं २ विश्वेभ्यो देवेभ्यः पाद्यंनमः । शेषं निवार्य ॥ पुनः शन्नोदेवी० । आपः क्षीरं । भगवन्तोऽर्घ्यं २ विश्वेदेवा इदंवोऽर्घ्यं नमः। विश्वेभ्यो देवेभ्यः समालभनं गन्धो नमः, अर्घो नमः, पुष्पं नमः, दीपो नमः, धूपो नमः, वासो नमः, विश्वेषान्देवानामर्घ्यदानाद्यर्चनविधिः सर्वः परिपूर्णोस्तु ॥ ओमासश्चर्षणीधृतो विश्वेदेवास आगत । दाश्वासो दाशुषः सुतम् ॥ उपयाम गृहीतोऽसि विश्वेभ्यस्त्वा देवेभ्य एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः ॥ विश्वेदेवास आगत शृणुताम इमं हवम्। इदं बर्हिर्निषीदत॥ अपः प्रदायाऽपसव्यं कृत्वा॥ पितुः पितामहस्य प्रपितामहस्य पितुर्वा मातुः सांवत्सरिके श्राद्धे इदमासनं स्वधा । पित्रे पिताम-

हाय प्रपितामहाय पित्रे वा मात्रे सांव० ब्राह्मणं त्वा भोजयामि ओंभोजय ॥ पितरं पितामहं प्रपितामहं पितॄनावाहयिष्यामि ओमावाहय ॥ तिलान्विकीर्य ॥ श्राद्धानुवाकौ तूखानामार्षम् । अपयन्त्वसुराः पितृरूपा ये रूपाणि प्रतिमुच्याऽचरन्ति परापरोनिपुरो ये हरन्ति अग्निष्टांल्लोकान्प्रणुदत्वस्मान् । अपेतो यन्त्वसुरा ये पितृषदः उदीरतामवरा उत्परास उन्मध्यमाः पितरः सोम्यासः असुं य्य इयुरवृका ऋतज्ञास्ते नोऽवन्तु पितरो हव्येषु एत पितरो मनोजवैरागच्छन्त पितरो मनोजवैः । ये निखाता ये परोप्ता गर्भाद्येऽवपेदिरे सर्वांस्तानग्न आवह पितॄन्हविषे अत्तवे । आगच्छन्तु पितरो मनोजवसः पितरः पितरः शुन्धध्वम् । आ मे यन्तु पितरो भागधेयं विराजाहूताः सलिलात्समुद्रात् ।

अस्मिन्यज्ञे सर्वकामांल्लभन्तामक्षीयमाणानुपजीवन्त्वे- तान् ॥ अन्तर्दधे पर्वतैरन्तर्मह्या पृथिव्या दिवा दिग्भिरनन्ताभिरन्तरन्यान्पितॄन्दधे ॥ अन्तर्दधे ऋ- तुभिरहोरात्रैः ससन्धिकैरर्धमासैश्च मासैर्ऋतुभिः प- रिवत्सरैः संवत्सरस्य कल्पैभिश्चान्तरन्यान्पितॄन्दधे ॥ यास्तिष्ठन्तीति त्रिष्टुप् ॥ यास्तिष्ठन्ति या धावन्ति या अद्रुग्धाः परिस्रुषीः । अद्भिर्विश्वस्य धत्री- भिश्चान्तरन्यान्पितॄन्दधे ॥ अमृता वागमृता आपो- ग्निर्वाचोऽमृतं तत्त्रिवृदेकधाम ताभिर्मत्प्रत्ताभिः स्व- धया मदध्वमिहास्मभ्यं वसीयोऽस्तु देवा यन्मे माता प्रलुलोभ यश्चचाराऽननुव्रतं तन्मे रेतः पिता वृङ्क्तां माभूरन्योऽवपद्यताम् ॥ १ ॥ यास्तिष्ठन्ति० यन्मे पि- तामही० पितामहो वृङ्क्तां ॥ २ ॥ यास्तिष्ठन्ति० यन्मे प्र- पितामही० प्रपितामहो वृङ्क्तां ॥ ३ ॥ लाजाश्च० । भगवन्तः

पाद्यं २ पित्रे० वा मात्रे० सां०पाद्यं स्वधा। शेषं नि-
वार्य। सव्येनाचम्य। अपसव्येन। यस्तिष्ठन्ति इतिषट्।
यस्तिष्ठन्ति० यन्मे माता० १ यास्तिष्ठन्ति० यन्मे
माता० २ यास्तिष्ठन्ति० यन्मे पितामही०।३।
यास्तिष्ठन्ति० यन्मे माता० ४ यास्तिष्ठन्ति० य-
न्मे पितामही ० ५ यास्तिष्ठन्ति० यन्मे प्रपितामही ६
आपः क्षीरं०। भगवन्तोऽर्घ्यं २ पितः पिताम-
ह प्रपितामह पितः सां० इदं वोऽर्घ्यं स्वधा।
पवित्रं निवार्य॥ पित्रे वा मात्रे सां० समालभनं
गन्धः स्वधा। गन्धलेपं निवार्य। सव्येनाऽचम्य।
अपसव्येन। पवित्रपाणिः। पित्रे वा मात्रे सां०
अर्घःस्वधा पुष्पं स्वधा। पित्रे दीपः स्वधा धूपः
स्वधा पित्रे वासांसि स्वधा॥ दक्षिणाग्रान्दर्भाना-
स्तीर्य॥ सव्येन। शुन्धन्तां लोकाः। अपसव्येन।

पितृषदनः पितृषदनमसि पितृभ्यः स्थानमसि । पितृभ्यः समालभ० पितृभ्योऽर्घः स्वधा, पुष्पं स्वधा पि० दीपःस्वधा, पितृभ्य आच्छादनं वासांसिस्वधा । पितॄणामर्घ्यदानाद्यर्चन० ॥ आदित्या रुद्रा वसवो मे सदस्यास्तेषां सख्ये स्वधया मदध्वं स्वधां वहध्वममृतस्य योनिं याऽत्र स्वधा पितरस्तां भजध्वम् ॥ सव्येन ॥ इदमन्नमिदं देवेभ्यः शृतं चरुमभिघार्य । अपसव्येन । इदमन्नमिदं पितृभ्यः शृतं चरुमभिघार्य । प्रक्षाल्य तण्डुलान्पवित्रान्तर्हितानावपति, प्रक्षाल्य मूलतो मेक्षणमवदधाति ॥ अग्नावधिश्रित्य, तत्र चाभिघार्य, दक्षिणत उद्वास्य पुनश्चाभिघार्य । पित्रे दक्षिणपश्चिमाग्रैस्तरैः पुरस्तात्, श्रियै सोमवत्यै अन्नपूर्णाभगवत्यै समालभनं गन्धोनमः अर्घोनमः पुष्पंनमः ॥ श्रियं देवीं० ॥

अग्नौ करवाणि ॐ कुरु । सोमाय पितृमते स्वधा नमः १ अग्नये कव्यवाहनाय स्वधानमः २ तूष्णीं पात्रेषु निक्षिपेत् ॥ इत्यग्नौ हुत्वा ये मामकाः पितरः पार्थिवासो येऽन्तरिक्षे ये दिवि ये समुद्रे ये वाचमाप्त्वा अमृताबभूवुस्तेऽस्मिन्यज्ञे सर्वकामांल्लभन्ताम् ॥ एतद्वः पितरो भागधेयं पात्रेषु दत्तममृतं स्वधावत् । अक्षीयमाणमुपजीवत्वैनं मया प्रत्तं स्वधया मदध्वम् ॥ अयं यज्ञः परमो यः पितृणां पात्रेषु देयं हविरध्यमग्नेः । मनश्च वाक्च पितरो वः प्रदानैरश्विभ्यां प्रत्तं स्वधया मदध्वम् ॥ एषा व ऊर्गेषा वः स्वधा तामत्त च पिबत च मा च वः क्षिष्ठ येह पितर ऊर्ग्देवतासु तस्यै वयं ज्योग्जीवन्तो भूयास्म । आ मा स्वपक्कममृतं निविष्ठं मया प्रत्तं स्वधया मदध्वं क्षीरं घृतंवासिच्य ॥

सव्येन ॥ वैश्वदेवहविषि पिन्वमानं विश्वेषु भूतेषु पृथग्निविष्टं क्षीरं घृतंवासिच्य ॥ विश्वेभ्यो देवेभ्यो ऽन्नंनमः २ अन्नं मधुमधु पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखेऽमृतं जुहोमि ऊर्गस्योर्जोदा ऊर्जं मे देहि ऊर्जमयि धेहि अन्नं मे देह्यऽन्नमयि धेहि अक्षितिरसि मा मे क्षिष्ठाऽमुत्राऽमुष्मिंल्लोक इह च ॥ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् समूढमस्य पांसुरे ॥ विष्णो हव्यं रक्षस्व ॥ विश्वेभ्यो देवेभ्यो यथोपस्थितं दत्तं दास्यमानेन सह सव्यञ्जनममृतमन्नं नमः, नमो देवेभ्यः ॥ अपसव्येन ॥ पित्रे सां० अन्नंस्वधा ३ पितामहायाऽन्नं स्वधा ३ प्रपितामहायाऽन्नं स्वधा ३ अन्नं मधुमधु० । विष्णो कव्यं रक्षस्व ॥ पित्रे पि० सां० यथोपस्थितं० अन्नंस्वधा, स्वधा पितृभ्यः ॥ पयः

पृथिव्यां०, दधि क्राव्णो०, घृतवतीभु०, मधु वा ता ऋतायते०, शर्कराभिरऽव०, पञ्चव्युष्टी० पुरुषमेधः पुरुषस्येति । पुरुषसूक्त लक्ष्मीसूक्तौ पठित्वा ॥ सव्येन अद्य दिनेऽद्ययथा संकल्पा० । शन्नो देवी० । विश्वेभ्यो देवेभ्योऽपोशानं नमः । अपसव्येन । यास्तिष्ठन्ति० । पित्रे० सां० अपोशानं स्वधा ॥ तिलमन्नं च पानीयं सकुशं तेषु चाग्रतः । विकिरत्पितृभूतेभ्यो जपन्नपहता इति ॥ अपहता असुरा रक्षांसि पिशाचाः । वेदिषदः प्राश्नन्तु भवन्तोऽमृतं जुषध्वममृतं भुञ्जीत ॥ यन्मे प्रकामादिति भुञ्जानान्समीक्षमाणो जपति ॥ यन्मे प्रकामादुत वाप्यकामादऽसमिद्धे ब्राह्मणे ब्राह्मणे वा । यत्स्कन्दति निर्ऋतिः पाथमुग्राम‌ऽग्निष्टत्सर्वं शुन्धतु । उशन्तस्तेन पितरो मदन्तां तेन पूतेन पितरो मादयंताम् ।

अहोरात्रैः ससन्धिकैरर्धमासैश्च मासैर्ऋतुभिः परिव-
त्सरैः । संवत्सरस्य कल्पैर्भिरन्तरन्यान्पितॄन्दधे ।
यद्वा क्रव्यादऽजहादेकमङ्गं पितृलोकं जनयञ्जातवे-
दाः । तद्व एतेन पुनराप्यायतामरिष्टासः पितरो
माधयध्वम् । स्वधां वहध्वममृतस्य योनिं यात्र
स्वधा पितरस्तां भजध्वम् ॥ ॐभूर्भुवःस्वस्तत्स-
वितुः० ३ ॥ नारायणस्यार्षम् ॥ मधु वात ऋता-
यते मधु क्षरन्ति सिन्धवः । माध्वीर्नः सन्त्वो-
षधीः ॥ मधु नक्तमुतोषसा मधुमत्पार्थिवं रजः ।
मधु द्यौरस्तु नः पिता ॥ मधुमान्नो वनस्पतिर्मधुमा-
नऽस्तु सूर्यः । माध्वीर्गावो भवन्तु नः ॥ ॐ मधु ३ ॥
अन्तश्चरसि० । ब्रह्मार्पणं० ॥ अमृतोपस्तरणमसि
स्वाहा ॥ श्राद्धब्राह्मणपाठः ॥ दक्षिणाग्रान्दर्भानास्तीर्य ॥
यास्तिष्ठन्ति ॥ पित्रे पितामहाय० सांवत्सरिके श्राद्धे

भूपृष्टे दर्भास्तरणे तिलोदकेनाऽवनेजनं स्वधा ॥ उशन्तस्त्वा हवामह उशन्तः समिधीमहि । उशन्नुशन्त आवह पितॄन्हविषे अत्तवे ॥ तिलास्तोयं तथा चीरं दीपधूपौ बलिस्तथा । मधुसर्पिःसमायुक्तमष्टाङ्गं पिण्डसम्भवम् । वामजानुं भूमौ निधाय ॥ देवताभ्यः पितृभ्यश्च० ॥ ३ ॥ अद्य तावत्, पृथिवीदर्विरक्षिता तृप्तिः स्वधाऽनुपदस्तां तां पृथिवीं दर्विमक्षितां तृप्तिं स्वधामनुपदस्तामऽग्निरिव पृथिवीमुपजीव । पितरऽमुकाऽमुकगोत्र एष ते पिण्डः, ये चात्र त्वाऽन्वेषा ते स्वधा वसुभ्यः स्वधा षष्ठ एष ते लेपः । अप उपस्पृश्य ॥ अन्तरिक्षं दर्विरक्षिता तृप्तिः स्वधाऽनुपदस्तातामन्तरिक्षं दर्विमक्षितां तृप्तिं स्वधामऽनुपदस्तां वायुरिवान्तरिक्षमुपजीव, पितामहाऽमुकाऽमुकगोत्र एष ते पिण्डः, ये चात्र त्वाऽन्वेषा

ते स्वधा रुद्रेभ्यः स्वधा पञ्चम एष ते लेपः, अप उपस्पृश्य ॥ द्यौर्दर्विरक्षिता तृप्तिः स्वधाऽनुपदस्ता तां दिवं दर्विमक्षितां तृप्तिंस्वधामऽनुपदस्तां सूर्य इव दिवमुपजीव प्रपितामहाऽमुकाऽमुकगोत्र एष ते पिण्डः, ये चात्र त्वाऽन्वेषा ते स्वधा आदित्येभ्यः स्वधा चतुर्थ एष ते लेपः, अप उपस्पृश्य ॥ मूलपुरुषा भूमिस्वामिनः पितरः! एष वः पिण्डः स्वधा ये च वोऽन्वऽत्र पितरो मादयध्वम् । येऽत्र पितरः प्रेता युष्मांस्तेऽनु य इह पितरो जीवा अस्मांस्तेऽनु येऽत्र पितरः प्रेता यूयं तेषां वसिष्ठा भूयास्थ, य इह पितरो जीवा वयं तेषां वर्षिष्ठा भूयास्म ॥ एतानि वः पितरो वासांसि । अतो नोन्यत्पितरो मायूढ्वम् । वीरान्नः पितरो दत्त । पिण्डलेपं निवारयेत् ॥ पित्रे वा मात्रे सांवत्सरि·

के श्राद्धे समालभनं गन्धः स्वधा ॥ गन्धलेपं निवारयेत ॥ एवं पित्रे अर्घः स्वधा पुष्पं स्वधा। पित्रे दीपः स्वधा धूपः स्वधा । पित्रे भक्ष्यभोज्यफल-मूलबलिनैवेद्यमाहाराद्यऽन्नं स्वधा ॥ पित्रे तिलमधुमिश्रमुदकपात्रमाचमनीयं जलंस्वधा । पित्रे हिमपानं स्वधा पित्रे क्षीरपानं स्वधा। पित्रे मधुपानं स्वधा। पित्रे तिलोदकं स्वधा । पित्रे उदकतर्पणं स्वधा हिमं हिमं रजतं रजतम् ॥ सव्येनाऽचम्य ॥ वसन्तायनमः० ॥ अपसव्येन ॥ यास्तिष्ठन्ति० ॥ ऊर्जं वहन्तीरमृतं घृतं मधु पयः कीलालं परिस्रुतं स्वधा स्थ पितृन्मे तर्पयत ॥ सव्येन ॥ मा मे क्षेष्ठेति सतृणमन्नमभ्युक्ष्य ॥ मा मे क्षेष्ठा बहु मे पूतमस्तु ब्रह्मणो मे जुषतामन्नमन्नम् । सहस्रधारममृतोदकं मे पूतमस्त्वेतत्परमे व्योमन् ॥ देवतायै बलिमुपहरेत् ॥

सावित्राणि महागणपतये० पितृगणदेवताभ्यो नमो नैवेद्यं निवेदयामिनमः ॥ अपसव्येन ॥ सर्वमन्न-मुपादाय सतिलं दक्षिणामुखः । वारिणाऽप्लाव्य तच्चान्नं पृच्छेत्प्रश्नत्रयं द्विजान् ॥ विप्रदमन्नमानीय "कश्चित्सम्पन्नं भोः" । सुसम्पन्नम् । "तृप्यन्तु भवन्तः" । तृप्ताः स्मः । "शेषमन्नमिष्टैः सह" ॥ अग्निदग्धाश्च ये जीवा येऽप्यऽदग्धाः कुले मम । भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिम् ॥ येषां न पचते माता येषां न पचते पिता । उ-च्छिष्टं येच कांक्षन्ति तेषां तृप्तिः स्वधा नमः ॥ सव्येन ॥ असोमपाश्च ये जीवा यज्ञभागविवर्जिताः । तेषामन्नं प्रदास्यामि विकिरं वैश्वदेवके ॥ तृप्तानाचम्य । अपसव्येन । विप्रानाचमयेत् ॥ पित्रे० आचमनीयं स्वधा । सव्येन । विश्वेभ्योदेवेभ्यआचमनीयं नमः ॥

अपसव्येन ॥ यन्मे रामेत्यऽर्धप्रदक्षिणं कृत्वा प्रत्येत्य, दक्षिणस्कन्धेन पिण्डावलोकनं च ॥ यन्मे रामःश-कुनिः श्वापदश्च यन्मे शुचिर्मन्त्रकृतस्य प्राशत् । वैश्वानरः सविता तत्पुनातु तस्मिन्पूते देवता मा-दयन्तां तेन पूतेन पितरो मदन्ताम् ॥ यास्तिष्ठ-न्ति० ॥ पित्रे दक्षिणायै तिलहिरण्यरजतनिष्कर्ण ददानि ॥ सावित्राणि० प्रतिगृह्णामि ॥ अभिरमन्तु भवन्तः, अभिरताःस्मः । देवाश्च पितरश्चैतत्पूत-मन्त्रोपजीवन्ताम् अस्मिल्लोके मां धत्त जीवेम शरदः शतं पश्येम शरदः शतम् । अथास्मभ्यमूर्जन्धत्त ज्योतिर्दत्त ह्यऽजरं न आयुः । यदन्तरिक्षं पृथिवी-मुत द्यां यत्पितरं मातरं वा जिहिंसिम । अग्निर्न-स्तस्मादेनसो गार्हपत्यः प्रमुञ्चतु चकृम यानि दु-ष्कृता ॥ तृप्यन्तु भवन्तः पितरो ये च भवतोऽनु

येचास्मास्वाशंसन्ति तृप्यत ॥ तृप्यन्तु भवन्तः पितामहा ये च० ॥ तृप्यन्तु भवन्तः प्रपितामहा ये च० ॥ (एव, तृप्यन्तु भवत्यो मातरो याश्च भवतीरनु याश्चास्मास्वाशंसन्ति तृप्यत ॥ तृप्यन्तु भवत्यः पितामह्यो याश्च० । तृप्यन्तु भवत्यः प्रपितामह्या याश्च० ) । तृप्यतु ३ एवमस्तु ॥ पितुः वा मातुः सांव० दत्तमन्नमक्षय्यमस्तु स्वधा, "इदमन्नमक्षय्यमस्तु स्वधा" इति विप्राः प्रतिब्रूयुः ॥ दातारो नोऽभिवर्धन्तां वेदाः सन्ततिरेवच ॥ श्रद्धा च नो मा व्यगमद्बहु देयं च नो अस्तु । अन्नं च नो बहु भवेदऽतिथींश्च लभेमहि । याचितारश्च नः सन्तु मा च याचिष्म कंचन ॥ "एता एवाऽशिषः सत्याः सन्तु" ॥ इति विप्राः प्रतिब्रूयुः ॥ सव्येन ॥ शन्नो देवी ॥ विश्वेभ्योदेवेभ्यः दक्षिणायै० ॥ विश्वे-

देवाः प्रीयन्तां प्रीता सन्तु ॥ शन्नो भवन्तु वाजिनो हव्येषु देवत्राता मितद्रवस्वर्काः । जम्भयन्तो हि वृकं रक्षांसि सनेम्यस्मद्यूयमनमीवाः संस्रावपात्रमुत्तानं कृत्वा ताभिरद्भिः पुत्रकामो मुखमनक्ति ॥ वाजे वाजे इति कुशाविसर्जनम् ॥ वाजे वाजे वत वाजिनो नो धनेषु विप्रा अमृता ऋतज्ञाः । अस्य मधु पिबत मादयध्वं तृप्ता यात पथिभिर्देवयानैः ॥ अपसव्येन । आ मा वाजस्येति पिण्डपरिषेकः ॥ आ मा वाजस्य प्रसवोजगम्यादा मा द्यावापृथिवी विश्वरूपे । आ मा गन्तां पितरं मातरं चा मा सोमो अमृतत्वेन गम्यात् ॥ सव्येन ॥ गायत्र्यै नमः ॐभूर्भुवःस्वस्त ३ अपसव्येन । देवताभ्यः० ३ । अद्यतावत् पितुः वा मातुः सांवत्सरिकं त्रैपुरुषं वैश्वदेवाष्टकपूर्वकं ब्राह्मणपूजनमच्छिद्रं सम्पूर्णमस्तु

एवमस्तु ॥ पित्रे वा मात्रे सांवत्स० तिलोदकं स्वधा उदकतर्पणांस्वधा ॥ अग्निं विमुञ्चामि ३ ॥ नयामि । सव्येन । परिसमूह्य ६ स्तृणामि ४ । अग्नये स्वाहा, प्रजापतये स्वाहा, सूर्याय स्वाहा, प्रजापतये स्वाहा ॥ विमुञ्चामि ॥ ३ ॥ नयामि ॥ अचित्याग्निश्चिकितिर्हव्यवाट् समुद्रथः । अग्निः शुक्रेण शोचिषा बृहत्सूर्यो अरोचत । घ्नन्गृद्धाण्यपद्विषो दहन्रक्षांसि दाशुषः ॥ अग्निर्विश्वस्य राजते अग्निर्विश्वं विराजते अग्निः सर्वं विराजते ॥ भगवन्पुण्डरीकाक्ष भक्तानुग्रहकारक । अस्मद्दयानुरोधेन सन्निधानं कुरु प्रभो । तेजोसि तेजो मयि धेहीत्यात्मानं देहि भगवन् सन्निधत्स्व ॥ ततो गांग्रासादि॥ याकाचिद्योगिनी रौद्रा सौम्या घोरतरा परा । खेचरी भूचरी रामा तुष्टा भवन्तु मे सदा ॥ आ-

काशमातृभ्योऽन्नंनमः आकाशमातृभ्यः समालभनं गन्धोनमः अर्घोनमः पुष्पंनमः ॥ सौरभेयाः स्वर्ग-हिताः पवित्राः पुण्यराशयः । प्रतिगृह्णन्तु मे ग्रासं गावस्त्रैलोक्यमातरः, गोभ्योऽन्नंनमः ॥ ऐन्द्रवारुण-वायव्या याम्या नैर्ऋतिकाश्च ये । वायसाः प्रति-गृह्णन्तु इमं पिण्डं मयोद्धृतम् । काकेभ्योऽन्नंनमः श्वानौ द्वौ शावशबलौ वैवस्वतकुलोद्भवौ । ताभ्यां पिण्डं प्रदास्यामि स्यातामेतावहिंसकौ । श्वभ्योऽन्नं नमः। अपसव्येन । रौरवाधीनसत्त्वानां प्रेतद्वारनिवा-सिनाम् । अर्थिना याचमानानामन्नमुपतिष्ठतु ॥ सव्येन । शुनां च पतितानां च श्वपचां पापरो-गिणाम् । वायसानां क्रिमीनां च शनकैर्निक्षिपेद्भु-वि ॥ देवा मनुष्याः पशवो वयांसि सिद्धाः सय-क्षोरगदैत्यसङ्घाः । प्रेताः पिशाचास्तरवः समस्ता ये

चान्नमिच्छन्ति मया प्रदत्तम् ॥ पिपीलिकाकीटप-
तङ्गकाद्या बुभुक्षिताः कर्मणि बद्धबद्धाः । प्रयान्तु
ते तृप्तिमिदं मयान्नं तेभ्यो विसृष्टं सुखिनो भव-
न्तु ॥ येषां न माता न पिता न बन्धुर्नैवान्नसि-
द्धिर्नतथान्नमस्ति । तत्तृप्तयेऽन्नं भुवि दत्तमेतत्ते
यान्तु तृप्तिं मुदिता भवन्तु ॥ भूतानि सर्वाणि
तथान्नमेतदहं च विष्णुर्न ततोऽन्यदस्ति । तस्मा-
दहं भूतनिकायभूतमन्नं प्रयच्छामि भवाय तेषाम् ॥
चतुर्दशो भूतगणो य एष तत्र स्थिता ये खलु भूत-
सङ्घाः । तृप्त्यर्थमन्नं हि मया विसृष्टं तेषामिदं ते
मुदिता भवन्तु ॥ इत्युच्चार्य नरो दद्यादन्नं श्रद्धा-
समन्विताः । भुवि भूतोपकाराय गृही सर्वाश्रयो
यतः ॥ अपसव्येन । यमाय धर्मराजाय मृत्यवे चा-
न्तकाय च । वैवस्वताय कालाय सर्वप्राणहराय

च ॥ औदुम्बराय नीलाय दध्नाय परमेष्टिने । वृकोदराय भीमाय चित्रगुप्ताय वै नमः । पाशहस्तकृतान्ताय प्रेताधिपतये नमः ॥ सव्येन । ये विश्वभाविनो भूता ये च तेष्वनुयायिनः । आहरन्तु बलिं तुष्टाः प्रयच्छन्तु शुभं मम ॥ योऽस्मिन्निवसति क्षेत्रे क्षेत्रपालः सकिङ्करः । तस्मै निवेदयाम्यद्य बलिं पानीयसंयुतम् ॥ क्षां क्षेत्राधिपतयेऽन्नं नमः रां राष्ट्राधिपतयेऽन्नं नमः । सर्वाभयवरप्रद मयि पुष्टिं पुष्टिपतिर्दधातु ॥ अपसव्येन । आयुः प्रजां धनं विद्यां स्वर्गमोक्षौ सुखानि च । प्रयच्छन्तु तथा राज्यं नृणां प्रेताः पितामहाः ॥ एष पिण्डो मया दत्तस्तव हस्ते जनार्दन । गयायां पितृरूपेण स्वयमेवोपगृह्यताम् ॥ आत्मनश्चार्थलाभाय क्षेमाय विजयाय च । शत्रूणां बुद्धिनाशाय पितृ-

नुद्धरणाय च ॥ पञ्चक्रोशं गयाक्षेत्रं क्रोशमेकं गयाशिला । यत्र तत्र स्मरेन्नित्यं पितॄणां दत्तमक्षयम् ॥ सव्येन । गायत्र्यै नमः ओंभूर्भुवःस्वस्त० ३ महागणपतेः० अग्नेः वायोः० अष्टकादेवतायाः वासुदेवस्य० आत्मनो० पितुः वा मातुः सांवत्सरिकेश्राद्धे कलशपू० क्षत्रेश्वरपू० अच्छिद्रं सम्पूर्णमस्तु एवमस्तु ॥ एताभ्यो० यवोदकं नमः ॥ अज्ञां मे दीयतां नाथ नैवेद्यस्यास्य भक्षणे । शरीरयात्रासिद्ध्यर्थं भगवन्क्षन्तुमर्हसि ॥ आपन्नोस्मि शरण्योसि सर्वावस्थासु सर्वदा । भगवंस्त्वां प्रपन्नोस्मि रक्ष मां शरणागतम् ॥ ईशानविष्णुकमलासनकार्तिकेयवह्नित्रयार्करजनीशगणेश्वराणाम् । क्रौञ्चामरेन्द्रकलशोद्भवकश्यपानां पादं नमामि सततं पितृमुक्तिहेतोः ॥ कलिकल्वषविमुक्तः पूजितः सिद्ध-

सङ्घैरमरचमरमालावीज्यमानोऽप्सरोभिः । पितृशतमपि बन्धून्पुत्रपौत्रान्प्रपौत्रानपि नरकनिमग्नांस्तारयेद्विष्णुरेव ॥ ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायणः सरसिजासनसन्निविष्टः । केयूरवान् कनककुण्डलवान्किरीटी हारी हिरण्मयवपुर्धृतशङ्खचक्रः ॥ कायेन वाचा मनसेन्द्रियैर्वा बुद्ध्याऽऽत्मना वाऽनुसृतस्वभावात् । करोमि यद्यत्सकलं परस्मै नारायणायेति समर्पयामि ॥ करचरणकृतं वाक्कायजं कर्मजं वा श्रवणनयनजं वा मानसं वाऽपराधम् । विदितमविदितं वा सर्वमेतत्क्षमस्व जय जय करुणाब्धे! श्रीमहादेव शम्भो ॥ नमताशेषविघ्नौघवारणं वारणाननम् । कारणं सर्वसिद्धीनां दुरितार्णवतारणम् ॥ नमो धर्मनिधानाय नमःस्वकृतसाक्षिणे । नमः प्रत्यक्षदेवाय भास्कराय नमो

नमः ॥ शङ्खचक्रगदाखड्गपाशाङ्कुशशरान्धनुः । पा-
यादष्टभुजा देवी दुर्गा दुर्गतिहारिणी ॥ क्षमध्वं
मम चेत्रेशा दधध्वं सुखसम्पदः । खभूपातालदि-
क्संस्थास्तुष्टा यान्तु स्वकं पदम् ॥ आह्वानं नैव
जानामि नैव जानामि पूजनम् । पूजाभागं न जा-
नामि क्षम्यतां परमेश्वर ॥ उभाभ्यां जानुभ्यां पा-
णिभ्यां शिरसा चोरसा मनसा वचसा च नम-
स्कारं करोमि नमः ॥ नमो ब्रह्मणे इति तर्पणम् ॥
नमो ब्रह्मणे नमो अस्त्वग्नये नमः पृथिव्यै नम
ओषधीभ्यः । नमो वाचे नमो वाचस्पतये नमो
विष्णवे बृहते कृणोमि ॥ इत्येतासामेव देवतानां
सार्ष्टिं सायुज्यं सामीप्यं सलोकतामाप्नोति । य एवं
विद्वान् स्वाध्यायमधीते ॥ अपसव्येन ॥ पात्राणि
चालयेच्छ्राद्धे स्वयं शिष्योऽथवा सुतः न स्त्रियो

नच बालाश्च नान्यजात्यः कदाचन ॥ सव्येनाचम्य ॥ उदकलशमुपनिधाय स्वस्त्ययनं वाचयति । उत्तिष्ट ब्रह्मणस्पते देवायन्तस्त्वेमहि उपप्रायन्तु मारुतः सदानव इन्द्र प्राशूर्भवा सचा । अर्यमाऽयातु वृषभस्तुविष्मान्धन्ता वसूनि विधत्ते तनूपाः सहस्राक्षो गोत्रभिद्वज्रबाहुरस्मासु देवो द्रविणं दधातु । ये ते अर्यमन्बहवो देवयानाः पन्थानो राजन्दिव आचरन्ति । तेभिर्नो अद्य पथिभिः सुगेभीरक्षा च नो अधि च ब्रूहि देवाः "राष्ट्रभृतांदेवानामार्षम्" ॥ बोधश्च मा प्रतिबोधश्च पुरस्ताद्गोपायतामऽस्वप्नश्च माऽनवद्राणश्च दक्षिणतो गोपायतां, गोपायमानश्च मा रक्षमाणश्च पश्चाद्गोपायतां जागृविश्च माऽरुन्धती चोत्तराद्गोपायताम्, अनमित्रं नो अधराग‌ऽनमित्रमुदङ्कृधि । इन्द्राऽनमित्रं न पश्चादऽनमित्रं

पुरस्कृधि, अनमित्रैरहोभिः सचेमहि विश्वेदेवा अनमित्रा न उषसः सन्तु निम्रुचः । याः षडुर्वीः पञ्च प्रदिशस्ता नः पान्तु मित्रधानो मित्रे दधाता अभयं नो अस्तु । ये रात्रीमऽनुतिष्ठत ये च भूतेषु जागृथ पशून्ये सर्वान्रक्षथ तेन आत्मासु जागृत । बोधप्रतीबोधा स्वप्नानवद्राण गोपायमान रक्षमाण जागृवेऽरुन्धतीति ये देवास्तनूपाः स्थ ते म इह तन्वं पात बोधप्रतीबोधेत्यसौ वा आदित्यो बोधोऽग्निः । प्रतीबोधो स्वप्नानवद्राणेति चन्द्रमा वा अस्वप्नोऽयं यः पवते सोऽनवद्राणो गोपायमानरक्षमाणेत्यहर्वै गोपायमानो रात्री रक्षमानो जागृव्यऽरुन्धतीति यज्ञो वै जागृविर्दक्षिणाऽरुन्धत्येते वै देवा राष्ट्रभृतास्तानेवेष्ट आत्मनो गोपीथाय ।। मन्त्रार्थाः सफलाः सन्तु पूर्णाः सन्तु मनोरथाः । शत्रूणां

बुद्धिर्नाशोस्तु मित्राणामुदयस्तव ॥ मार्कण्डेयमुनेः स्वर्गवैद्ययोः स्वर्पतेर्यथा । आयुरारोग्यमैश्वर्यमेतच्चित्र-तयमस्तु ते ॥ जीव त्वं शरदः शतम् ॥

इत्युदकलशस्वस्त्ययनम् ॥ ॥

## अथैकोद्दिष्टश्राद्धम् ॥

ॐ शालिचूर्णेन ब्रह्मकलशमुल्लिख्य, तद्दक्षे विष्णुप्रतिमां वेदचतुष्टयीं क्षेत्रेशद्वयं च संस्थाप्य ॥ अभिनो देवी—वषट्ते विष्ण तावत् । प्रधानम् ॥ अग्रयेनमः ६ ॥ १ ॥ अग्निना रयिमश्नवत् । प्रजापते नहि त्वदन्या ॥ २ ॥ उदग्ने शुचयस्तव । अग्ने पवस्व स्वपा । त्वं नस्तन्तुरुत सेतुरग्ने । अग्ने नय सुपथा राये ॥ ३ ॥ ऋतूनां पत्नी प्रथमेयमागा । ऋतस्य धामा प्रथमा । देवा ग्रावाणो । ४ । तद्विष्णोः ।

विष्णुपञ्चायतनदेवताभ्योनमः। प्रतिमायां। प्र तद्विष्णुः। शेषशायिने। वेदचतुष्टये। यो रुद्रो०(वा)वषट्ते। अग्निमीढे। इषे त्वोर्जे त्वा। अग्न आयाहि। शन्नो देवी॥ क्षेत्रस्य पतिना वयं। अर्चन्तस्त्वा॥ यजमानमानीय॥ आसनशोधनादि। अनाभौ। तीर्थेस्नेयं। वसोः पवित्रमसि। परमात्मने। स्वप्रकाशो। वनस्पति। नमो धर्म। यत्रास्ति माता। दीपधूपौ अद्यतावत् महागणपतये। अग्नये वायवे सूर्याय ब्रह्मणे प्रजापतये कूष्मर्षिभ्यः। अग्नये पुष्टिपतये प्रजापतये। अग्नये शुचये अग्नये पवमानाय अग्नये तन्तुमते अग्नये पथिकृते। अग्नये अष्टकादेवतायै। विष्णुपञ्चायतनदेवताभ्यः। शेषशायिने नारायणाय। रुद्राय (वा) विष्णवे सानुचराय। पृथिव्यै अग्नये ऋग्वेदाय ब्रह्मणे छन्दोभ्यः।

अन्तरिक्षाय वायवे यजुर्वेदाय ब्रह्मणे छन्दोभ्यः । दिवे सूर्याय सामवेदाय ब्रह्मणे छन्दोभ्यः । दिग्भ्यः चन्द्रमसे अथर्ववेदाय ब्रह्मणे छन्दोभ्यः चतुर्वेदेश्वरेभ्यः । अभयङ्करीदेव्यै इहराष्ट्राधिपतये अमुकभैरवाय हेरुकादिभ्यः दीपोनमः धूपोनमः ॥ अपसव्येन समस्तमाता पितृभ्यः दीपः स्वधा । कुम्भो वनिष्ठुर्जनिता शचीभिर्यस्मिन्नग्रे योन्याङ्गर्भो अन्तः । प्लाशिर्व्यक्तः शतधार उत्सो दुहेन कुम्भी स्वधा पितृभ्यः ॥ अद्य तावत् पितः आद्यमौर्ध्वदैहिके प्रथमे । प्रथममासिके द्वितीये । त्रिपाक्षिके तृतीये । द्वितीयमासिके चतुर्थे । पञ्चपाक्षिके पञ्चमे । तृतीयमासिके षष्ठे । चतुर्थमासिके सप्तमे । पञ्चममासिके अष्टमे । ऊनषाण्मासिके नवमे । षाण्मासिके दशमे । सप्तममासिके एकादशे । अष्टम-

मासिके द्वादशे । नवममासिके त्रयोदशे । दशममासिके चतुर्दशे । एकादशमासिके पञ्चदशे । ऊनसांवत्सरिके षोडशे ( मलमध्येतु ) द्वादशमासिके षोडशे । ऊनसांवत्सरिके सप्तदशे एकोद्दिष्टे श्राद्धे एष ते दीपः एष ते धूपः ॥ सव्येन । प्रतिमायां जीवादानं । अनाभौ । ॐभूःपुरुषमावाहयामि नमः । ३ । स्नाने श्लोकतर्पणम् ॥ दक्षिणां सम्पाद्य ॥ अपसव्येन अक्षयं सव्यन । तद्विष्णोरित्यादि पुष्पादि ॥ ततोग्निसाधनं कृत्वा । पात्रं तिला० । आदौ पञ्च । अग्निपूजा । अग्नये समनमत ॥ अपूपचरौ अग्नये वायवे सूर्याय ब्रह्मणे प्रजापतये कूष्मर्षिभ्यः जुष्टं निर्वपामि । एवं प्रोक्षामि आज्यभागान्तं हुत्वा ॥ कूष्माण्डं तद्ब्राह्मणं च हुत्वा ॥ तेजोसि प्रधानं । अग्नये स्वाहा ६

ऋतुतिथिः ॥ इळामग्ने तेजोसि । अग्ने त्वं पारयानवो इति चेळाभागं हुत्वा ॥ वैश्वानरेणेतिपावमान्यब्राह्मणेनचेत्युपस्थानम् । यद्देवा देवहेळनमित्यञ्जलिः ॥ पावमानीसूक्तेन, वैश्वानरेण चेति तर्पणम् ॥ हुतमेक्षणं । तन्त्रसमाप्तिः । नयामि ॥ १ ॥ पुनरग्निं परिसमूह्य ६ आदौ पश्व । अक्षतचरौ ॥ अग्नये पुष्टिपतये प्रजापतये जुष्टंनिर्वपामि । अक्षतचरौ मेक्षणं न भवति । आज्यभागान्तं हुत्वा । प्रधानं । तेजोसि । अग्निना रयिमश्नवत् पोषमिव दिवे दिवे । यशसं वीरमुत्तमम् । १ । प्रजापते नहि त्वदन्य एता विश्वा जातानि परिता बभूव । यत्कामास्ते जुहोमस्तन्नो अस्तु वयं स्याम पतयो रयीणां स्वाहा ॥ २ ॥ स्रुवेणाज्यहोमः । अग्नये जनिविदे स्वाहा सोमाय जनि० । गन्धर्वाय ज० । आयुषः प्राणमित्ये-

कादश० । तेजोसि आकूतमिति त्रयोदश० ॥ ते० बृहस्पतिपुरोहिता इति ॥ ऋता षाडिति त्रयोदशा- हुतीः । अग्निर्भूतानामित्येकविंशमाधिपत्यानि जुहोति अग्निर्भूतानामाधिपतिः स माऽवतु तस्मै स्वाहा[१] । यमः पृथिव्याम[२] । वायुरन्तरिक्षस्याधि[३] । सूर्यो- दिवोधि[४] । चन्द्रमा नक्षत्राणाम[५] । विष्णुर्दिशाम[६] । पूषा पथीनाम[७] । त्वष्टा रूपाणाम[८] । सविता प्र- सवानाम[९] । इन्द्रो ज्येष्ठानाम[१०] । मित्रः सत्याना- म[११] । वरुणो धर्मानाम[१२] । रुद्रः पशूनाम[१३] । बृहस्पतिर्ब्रह्मणाम[१४] । ब्राह्मणो वाचाम[१५] । सोम ओ- षधीनाम[१६] । समुद्रः स्रवन्तीनाम[१७] । अन्नं साम्रा- ज्यानामधिपति तन्मा[१८] । गायत्री छन्दसामधिप- त्नी सा माऽवतु तस्यै स्वाहा[१९] । मरुतो गणाना- मधिपतयस्ते माऽवंतु तेभ्यः[२०] । पितरः पितामहाः

परावरेभ्यस्ते माऽवन्त्वऽस्मिन्ब्रह्मण्यस्मिन् क्षत्रेऽस्या-
माशिष्यस्यां पुरोधायामस्यां देवहूत्यां स्वाहा[२१] ॥
आकूत्यैत्वा स्वाहा । कामायत्वा स्वाहा । समृद्ध्यै-
त्वा स्वाहा । हिरण्यगर्भ इत्यऽष्टाभिः ॥ हिरण्य-
गर्भ । यः प्राणतो । य ओजोदा । येनद्यौः । य
इमेद्यावा । यस्येमेविश्वे । आपो ह यन् । आनः प्रजां
ॐभूः स्वाहा । ॐ भुवः । ॐ स्वः । ॐ भूर्भु-
वःस्वः स्वाहा ॥ अग्न आयूंषि । अग्निर्ऋषि ।
अग्ने पवस्व ॥ अन्वतचरुः ॥ अग्निं पुष्टिपतिं प्रजा-
पतिं च यजेत ॥ ऋतुतिथ्यादि । नयामि ॥ २॥ पुन-
राग्निं परिसमूह्य पर्युक्ष्य परिषिच्य । आदौ पश्च ॥
अपूपचरौ अग्नये शुचये अग्नये पवमानाय अग्नये
तन्तुमते अग्नये पाथिकृते जुष्टं निर्वपामि एवं प्रो-
क्षामि । आज्यभागान्तं । प्रधानं । उदग्ने शुचयस्तव

शुक्र भ्राजन्त ईरते । तव ज्योतिंष्यर्चय स्वाहा १ अग्ने पवस्व स्वपा अस्मे वर्चः सुवीर्यम् । दधद्रयिं मयि पोषम् स्वाहा । २ । त्वं नस्तन्तुरुत सेतुरग्ने त्वं पन्था भवासि देवयानैः । त्वयाग्ने पृष्ठं वयमारुहेमाऽथा देवैः सदमादं मदेम स्वाहा । ३ अग्ने नय सुपथा रये० । ४ । ऋतुतिथ्यादि । विमुच्य ॥ नयामि ॥ पुनः परिसमूह्य ६ । पुरस्तात् ४ अग्नये स्वाहा, प्रजाप० सूर्याय० प्रजापतये० । विमुञ्चामि ३ नयामि ॥ इत्युद्वाहः २४ ॥ ३ ॥ अथ व्याहृतिवैश्वदेव ॥ परिसमूह्य पर्युक्ष्य परिषिच्य ॥ ६ ॥ पुरस्तात् ॥ ४ ॥ अग्नये शुकारूढाय । गन्धादि ॥ गायत्रीब्राह्मणं च हुत्वा । अध्वर्योयं० ॥ वैश्वदेवस्य सिद्धस्य० । हन्तमनुष्येभ्योन्नं नमः आचमनीयं नमः ॥ अथाष्टका ॥ अग्निं परिसमूह्य । ६ ।

आदौ पञ्च १६। अपूपचरौ। अग्नये अष्टकादेवतायै जुष्टं निर्वपामि। एवं प्रोक्षामि॥ आज्यभागान्तम्॥ ~~प्रदानं।~~ तेजोसि। ऋतूनां पत्नी प्रथमेयमागादह्नां नेत्री जनित्री प्रजानाम्। एका सती बहुधोषो व्युच्छा जीर्णा त्वं जरय सर्वमन्यत् स्वाहा॥ १॥ ऋतस्य धामा प्रथमा व्युषस्यऽपामेका महिमानं विभर्ति। सूर्यस्यैका चरति निष्कृतानि घर्मस्यैका सवितैका नियच्छति स्वाहा॥ २॥ देवा ग्रावाणो घोषमकृत हविष्कृण्वन्तः परिवत्सरीयम्। एकाष्टके सुप्रजसः सुवीरा ज्योग्जीवेम बहिष्कृतो वयन्ते स्वाहा॥ ३॥ अष्टकानुवाकौ तूखानामार्षम्॥ इयमेव सा या प्रथमा व्यौच्छत् सा वा स्वन्तश्चरति प्रविष्टा। वधूर्मिमाय नवगज्जनित्री त्रय एनां महिमानः सचन्ते स्वाहा॥ १॥

छन्दस्वतीरुषसौ पेपिशाने समानं योनिमनु सञ्च रन्ती। सूर्यपत्नी विचरतः प्रजानती केतुमती अजरे भूरिरेतसः स्वाहा ॥ २ ॥ ऋतस्य पन्थामनु तिस्र आघुस्त्रयो घर्मासो अनु रेतसागुः । प्रजामेका रक्षत्यूर्जमेका व्रतमेका रक्षति देवयूनां स्वाहा॥३॥ चतुष्टोममदधाद्या तुरीया यज्ञस्य पक्षा ऋषयो भवन्ती । गायत्री त्रिष्टुब्जगती विराडर्कं युञ्जाना सुराभन्निदं स्वाहा ॥ ४ ॥ पञ्चभिर्धाता विदधा इदं यत्तासां स्वसृरजनत्पञ्च पञ्च । तासामयन्ति प्रयवेन पञ्च नानारूपाणि क्रतवो वसानाः स्वाहा ॥ ५ ॥ ऋतुतिथ्यादि । पूर्णान्तम् ॥ गोप्रदानम् ॥ कुशब्राह्मणम् । पूर्वाभिमुखां गां पश्चिमाभिमुखं यजमानं च संस्थाप्य ॥ नमस्कारः । प्रसीद मम हे विद्वान्भगवंस्त्वां नुता वयम् । आपोहिष्ठा । न वहन्तीः

भि । ॐगायत्र्यै नमः ॐभूर्भुवःस्व ३ । तत्पुरुषाय विद्महे ३ वा वासुदेवाय वि ३ सुभगायै वि ३ । पादेषु ऋग्वेदादिचत्वारः । सैव दक्षिणा । ॐभूःपुरुषमिति प्रतिमाविसर्जनम् ॥ अद्यतावत् । पितुः परलोके वैतरणीनदीसुखसन्तारणार्थं रुद्राय मणिमुक्तप्रवालान्नादिसहितां सहिरण्यां सवाससंसर्वोपस्करणोपेतां गां ददानि । तत्पुच्छं तु करे कृत्वा ॥ तर्पणान्ते वेदचतुष्टयीं सम्पाद्य । गायत्र्यै नमः अद्यतावत् पृथिव्याः अग्नेः । अच्छिद्रमस्तु ॥ प्रतिपादनं पादेषु ॥ अग्निमीळे० । इषे त्वो० । अग्न आयाहि० । शन्नोदेवी० । पृच्छां विसर्ज्य ॥ उदकलशं । अनन्तशाख० ॥ इति गोप्रदानं । अग्रेर्यविष्ठब्राह्मणपूजनम् ॥ ॐगायत्र्यै नमः । दक्षिणां कृत्वा । अपसव्येन । अक्षयं सव्येन । आश्रावित

मिति पूर्णाहुतिः ॥ विमुञ्चामि । नयामि ॥ पुनः परिसमूह्य पर्युक्ष्य ६ ॥

अथ श्राद्धमारभेत ॥ पृच्छायामासने षष्ठी द्वितीयाऽक्षयकर्मणि । अन्यत्र प्रथमा ज्ञेया ह्येकोद्दिष्ट उदाहृतम् ॥ वासोवीरान्नगन्धार्घादिभिरर्चां समर्पयेत् । पितराऽमन्त्रणेनैव प्रेतनामापि तन्वयात् ॥ श्राद्धारम्भे तथाचान्ते आसनावाहने तथा । एकेनैव कुशाग्रेण विष्टरं कारयेत्सुधीरिति ॥ यद्येकत्र भवेच्छ्राद्धमेकोद्दिष्टं च पार्वणम् । पार्वणं त्वभिनिर्वर्त्य चैकोद्दिष्टं ततश्चरेत् ॥ सव्येनाचम्य । पवित्रपाणिः ॥ शान्ताकारं भुजगशयनं० । ॐगायत्र्यै नमः ॐभूर्भुवःस्वस्त० ३ अपसव्येन ॥ देवताभ्यः ३ अद्यतावत् पितुः वा मातुः आद्यमौर्ध्वदैहिकं प्रथमं । प्रथममासिकं द्वितीयं । त्रिपाक्षिकं तृतीयं । द्वितीयमासिकं चतु

र्थं । पञ्चपाक्षिकं पञ्चमं । तृतीयमासिकं षष्ठं । चतुर्थमासिकं सप्तमं । पञ्चमासिकं अष्टमं । ऊन-षाण्मासिकं नवमं । षाण्मासिकं दशमं । सप्तम-मासिकं एकादशं । अष्टममासिकं द्वादशं । नव-ममासिकं त्रयोदशं । दशममासिकं चतुर्दशं । एकादशमासिकं पञ्चदशं ऊनसांवत्सरिकं षोडशं (मले तु) द्वादशमासिकं षोडशं ऊनसांवत्सरिकं स-प्तदशं) एकोद्दिष्टं श्राद्धं वैश्वदेवाष्टकपूर्वकं सान्वष्ट-क्यं ब्राह्मणपूजनमर्चासहं करिष्ये ॐकुरुष्व ॥ तिला-न्विकीर्य ॥ अग्निं परिसमूह्य ६ निहन्मि सर्वं यद-मेध्यवद्भवेद्धताश्च सर्वे सुरदानवा मया । रक्षांसि यक्षाः सपिशाचगुह्यकाः हता मया यातुधानाश्च सर्वे ॥ पितुः आद्यमौर्ध्वदैहिके एकोद्दिष्टे श्राद्धे एतत्ते आसनम् ॥ पितः आद्यमौर्ध्वदैहिके एतत्ते

ब्राह्मणान्त्वां भोजयामि । नावाहनं । तिलान्विकीर्य॥ अपयन्त्वसुराः पितृरूपा ये रूपाणि प्रतिमुच्याचरन्ति । परापुरोनि परो ये हरन्ति । अग्निष्टांल्लोकान्प्रणुदत्वस्मात् अपेतो यन्त्वसुरा ये पितृषदः। उदीरतामवराउत्परास उन्मध्यमाः पितरः सोम्यास असंय ईयुरवृका ऋतज्ञास्ते नोऽवन्तु पितरो हवेषु ॥ एहि पितर्मनोजवैरागच्छ पितर्मनोजवैः । ये निखाता ये परोप्ता गर्भाधेऽज्वपेदिरे । सर्वास्तानश्च आवह पितृन्हाविषे अत्तवे ॥ आगच्छ पितर्मनोजवाः पितः पितः शुन्धस्व । आ मे यन्तु पितरो भागधेयं विराजा हूताः सलिलात्समुद्रात् । अस्मिन्यज्ञे सर्वकामांल्लभतां अक्षीयमाणानुपजीवत्वेनान् ॥ अन्तर्दधे पर्वतैरन्तर्मह्या पृथिव्या दिवा दिग्भिरनन्ताभिरन्तरन्यान्पितृन्दधे । अन्तर्दधे ऋ-

तुभिरहोरात्रैः ससन्धिकैरर्धमासैश्चमासैर्ऋतुभिःपरिव-
त्सरैः संवत्सरस्य कल्पैभिरन्तरन्यान्पितृन्दधे ॥-
यास्तिष्ठन्ति या धावन्ति या अद्रुग्धा परिसस्रुषीः,
अद्भिर्विश्वस्य धत्रीभिरन्तरन्यान्पितृन्दधे । अमृता
वागमृता आपोग्निर्वाचोमृतं तत्त्रिवृदेकधाम ताभि-
र्मत्प्रत्ताभिः सुधया मदस्व । इहास्मभ्य वसीयो-
स्तु देवा यन्मे माता प्रलुलोभ यश्चचारानतुव्रतं
तन्मे रेतः पिता वृंक्तां माभूरन्योवपद्यताम् ॥ ला-
जाश्च ॥ भगवन् वा भगवति पाद्यम् २ । पितः
वा मातः आद्यमौर्ध्वे एतत्ते पाद्यम ॥ शेषं निवार्यं ।
सव्येनाचम्य । अपसव्येन ॥ पुनः यास्तिष्ठन्ति । आ-
पः क्षीरं । भगवन् (वा) भगवति अर्घ्यं २ पितः
आद्यमौर्ध्वदैहिके एतत्ते अर्घ्यम् ॥ पवित्रं निवार्यं ।
पितः आद्यमौर्ध्वदैहिके एकोद्दिष्टे श्राद्धे एष ते ग-

न्धः । सव्येनाचम्य । अपसव्येन । पितः एषतेऽर्घः एतत्ते पुष्पं एषते दीपः एषते धूपः । एतत्ते वासः ॥ पितुरमुकस्यामुकगोत्रस्य आद्यमौर्ध्वं एषते अर्घ्यदानाद्यर्चनविधिः सर्वः परिपूर्णोस्तु ॥ वसवो मे सदस्यास्तेषां सख्ये सुधया मदस्व सुधां वहस्व अमृतस्य योनिं याऽत्र सुधा पितस्तां भजस्व ॥ इदं पित्रे शृतमभिघार्य । प्रक्षाल्य तण्डुलान्पवित्रान्तर्हितानावपति । प्रक्षाल्य मूलतो मेक्षणमवदधाति ॥ अग्नावधिश्रित्य तत्र चाभिघार्य दक्षिणतः उद्वास्य पुनश्चाभिघार्य । यज्ञस्य सन्ततिरसीति दक्षिणपश्चिमाग्रैःस्तरैः परिस्तीर्य ॥ श्रियै सोमवत्यै गन्धादि । श्रियन्देवी ॥ प्रणवं मनसा ध्यात्वा तूष्णीमाहुतिद्वयमग्नौ जुहुयात् ओंओं पात्रेषु निक्षिपेत् ॥ येमामकाः पितरः पार्थिवासो ये

अन्तरिक्षे ये दिवि ये समुद्रे ये वाचमाप्त्वाऽमृता बभूवुः । तेस्मिन्यज्ञे सर्वकामांल्लभन्ताम् । एतत्ते पितर्भागधेयं पात्रेषु दत्तममृतं सुधावत् । अक्षीयमाणमुपजीवैनन्मया प्रत्तं सुधया मदस्व । अयं यज्ञः परमो यः पितुः पात्रेषु देयं हविरग्र्यमग्रेमनश्च वाक्च पितस्ते प्रदानैरश्विभ्यां प्रत्तं सुधया मदस्व । एषा ते ऊर्गेषा ते सुधा तामद्धि पिबच माच तेक्षेष्ट । एहि पित ऊर्देवतासु तस्यै वयं ज्योग्जीवन्तो भूयास्म । आसास्व पक्वममृतं निविष्टं मया प्रत्तं सुधया मदस्व क्षीरं घृतं वासिच्य ।। पितः एकोद्दिष्टे एतत्तेऽन्नम् एतत्ते मधु। इदं विष्णुर्वि । विष्णो इदं रक्षस्व । पितः एकोद्दिष्टे यथोपस्थितं दत्तं दास्यमानेन सह सव्यञ्जनममृतमेतत्ते अन्नम् ।। सव्येन । पयः पृथिव्याः, दधि-

क्राब्णो अकारिषं, घृतवतीर्भु, मधुवाता ऋताय-ते, शर्कराभिर, पञ्चव्युष्टीरनु, पुरुषमेधः पुरुषस्य नारायणस्यार्षम् । सहस्रशीर्षा ॥ तद्विष्णोः पर । अपसव्येन ।( ये केचिद्यत्र तत्रस्थाः प्रेतभागवशानुगाः। इहैव भूमौ ते सर्वे मद्दत्तमुपभुज्यतामिति ॥ तिलदर्भेषु प्रेतभागं दत्त्वा ॥ अद्यदिनेऽद्य यथा० ) यास्तिष्ठ-न्ति । पितः एकोद्दिष्टे श्राद्धे एतत्ते अपोशानम् ॥ अपहता असुरा रक्षांसि पिशाचा वेदिषदः प्राश्ना-तु भवान् । "स्त्रीविषये" (भवती) अमृतं जुषस्व अमृतं भुंक्ष्व । सव्येन । यन्मे प्रकामादिति समी-क्षमाणोजपति ॥ यन्मे प्रकामादुत वाप्यकामादऽ समिद्धे ब्राह्मणे ब्राह्मणे वा । यत् स्कन्दति निर्ऋति पाथ उग्रामग्निष्टत्सर्वं शुन्धतु उशंस्तेन पिता मद-तां तेन पूतेन देवता मादयन्ताम् । अहोरात्रैः स-

सन्धिकैरर्धमासैश्च मासैर्ऋतुभिः परिवत्सरैः संवत्सरस्य कलाभिरन्तरन्यान्पितॄन्दधे । यत्तेक्रव्यादजहादेकमङ्गं पितृलोकंजनयञ्जातवेदाः । तत्ते एतेन पुनराप्यायतामऽरिष्टासः पितर्मादयस्व सुधां वहस्व अमृतस्य योनिं याऽत्र सुधा पितस्तां भजस्व ॥

नारायणस्यार्षम् । मधुवाताऋतायते । अन्तश्चरसि भूतेषु । ब्रह्मार्पणं । अमृतोपस्तरणमसि स्वाहा ॥

इत्याचम्य । प्राणाय स्वाहा अपानाय समानाय उदानाय व्यानाय स्वाहा ॥ ॐभूरग्नये पृथिव्यै महते जातवेदसे स्वाहा । ॐभूवो वायवेऽन्तरिक्षाय म० । ॐस्वः सूर्यायाकाशाय म० । ॐभूर्भुवःस्व श्चन्द्रमसे हरिद्भ्यो महते० । विप्रेषु तृप्तिमागतेषु । अपसव्येन ॥ दक्षिणाग्रन्दर्भानास्तीर्य । दक्षिणामुखः यास्तिष्ठन्ति । पितः एकोदि० एतत्तेऽवनेजनम् ॥

उशन्तस्त्वा हवामहे उशन्तः समिधीमहि । उश-न्नुशत आवह पितरं हविषे अत्तवे ॥ वामजानुं भूमौनिधाय । तिलास्तोयं ॥ ॐदेवताभ्यः पितृभ्यश्च ३ अद्यतावत् पृथिवी दार्विरक्षिता तृप्तिः सुधाऽनुपद-स्तां तां पृथिवीं दर्विमक्षितां तृप्तिं सुधामनुपदस्ता-म् अग्निरिव पृथिवीमुपजीव पितः अमुकामुकगोत्र आद्यमौर्ध्वदैहिके प्रथमे, एकोद्दिष्टे श्राद्धे एष ते पि-ण्डः । अपउपस्पृश्य । एवं । देवताभ्यः । अद्यतावत् पृथिवी । पितः प्रथममासिके द्वितीये एकोद्दिष्टे एष ते पिण्डः अपउपस्पृश्य । १६ वा १७ पिण्डान्दत्वा मूलपु-रुषा भूमिस्वामिनः पितर एष वः पिण्डःस्वधायै च वोन्वऽत्र पितर्मादयस्व येऽत्र पितः प्रेतास्त्वान्तेऽनु य इह पितर्जीवा अस्मांस्तेऽनु येऽत्र पितः प्रेतास्त्वं तेषां वसिष्ठो भूयाः य इह पितर्जीवा वयं तेषां वर्षिष्ठा

भूयास्म ॥ एतत्ते पितः वासः । अतो नोन्यन्पि-
तर्मो यूथाः । वीरान्नः पितर्देहि । पिण्डलेपं नि-
वारयेत् । पितः आद्यसौ० एष ते गन्धः । एष ते-
ऽर्घः । एतत्ते पुष्पं । एष ते धूपः । एष ते दीपः ।
एष ते भक्ष्यभोज्यफलमूलबलिः । एतत्ते तिलम-
धुमिश्रमुदकपात्रमाचमनीयम् । पितः एतत्ते हिम-
पानं एतत्ते क्षीरपानं एतत्ते मधुपानं एतत्ते ति-
लोदकम् । एतत्ते उदकतर्पणं हिमं २ रजतं २ ॥
सव्येनाचम्य । वसन्ताय नमः ६ ॥ अपसव्येन ॥
याास्तिष्ठन्ति ॥ ऊर्जं वहन्तीरमृतं घृतं मधु पयः
कीलालं परिस्रुतं सुधा स्थ पितरं मे तर्पयत ॥
सर्वमन्नादिकं संयूय । अद्यतावत् पितः एकोद्दिष्टे
पाथेयं पथि श्रमनिवारणार्थमेतत्ते नित्यान्नम् ॥
सव्येन । मा मेक्षेष्टा बहु मे पूतमस्तु ब्रह्मणो मे जु-

षतामन्नमन्नम् । सहस्रधारममृतोदकं मे पूतमस्त्वे-तत्परमे व्योमन् ॥ देवतायै बलिमुपहरेत् । अमृ-तमस्तु सावित्राणि महागणपतये ब्रह्मणे अ-ग्निष्वात्तादिभ्यः पितृगणदेवताभ्यः ओं नमो नैवे-द्यं । अपसव्येन । नान्नं विकिरेत् । तिलदर्भक्षीर-मेकीकृत्य विकिरेत् । स्वदितं सुस्वदितं । तृप्यतु-भवान् "वा" भवती । तृप्तोस्मि "वा" तृप्तास्मि । पिता वा माता तृप्यतु ॥ सव्येनाचम्य ॥ अपसव्येन पितः एको एतत्ते आचमनीयम् ॥ यन्मे राम इत्यर्धप्रदक्षिणेन प्रत्येत्य । यन्मे रामः शकुनिः श्वा-पदश्च यन्मे शुचिर्मन्त्रकृतस्य प्राशत् । वैश्वानरः स-विता तत्पुनातु तस्मिन्पूते देवता मादयन्तां तेन पूतेन पिता मदताम् ॥ यास्तिष्ठन्ति ॥ पितः ए-को एतत्ते दक्षिणायै तिलहिरण्यरजतनिष्क्रयां द-

दानि ॥ अभिरमतु भवान् अभिरतोस्मि पितरेत-
त्पूतं मेऽत्रोपजीवास्मिँल्लोके मां धेहि जीवेम शर-
दःशतं पश्येम शरदःशतमऽथास्मभ्यमूर्जन्धेहि ज्यो-
तिर्धेह्यऽजरन्न आयुः । यदन्तरिक्षं पृथिवीमुत द्यां
यत्पितरं मातरं वा जिहिंसिम । अग्निर्नस्तस्मादे-
नसो गार्हपत्यः प्रमुञ्चतु चकृम यानि दुष्कृताः ॥
तृप्यतु भवान् वा भवती पिता वा माता तृप्यतु
चेद्दोप्रदाने विष्णुप्रतिमादानं कृतं न स्यात् तदाऽत्राऽदौ
चेत्रेशबलिः । अन्यथा स्वस्थाने । सव्येन । विष्णु-
प्रतिमाच्छिद्रम् ॥ अपसव्येन । दानप्रतिष्ठामादौ पश्चा-
ज्जलकुम्भदानमिति व्यवस्था ॥ कलशं शुभदं दिव्यं ज-
लेन परिपूरितम् । तस्मात्कलशदानेन मम सन्तु मनो-
रथाः ॥ घोरायां यमपन्थायां क्षुत्तृष्णोपहतात्म-
नाम् । तेषामुद्धरणार्थाय सान्नकुम्भं ददाम्यहम् ॥

सावित्राणि । अद्यतावत् पितुः एकोद्दिष्टे तस्य परलोके क्षुत्पिपासादिपीडानिवारणार्थमिमं जलकुम्भं सान्नंसवाससं ददानि ॥ सव्येन । विष्णुप्रतिमाप्रतिपादनम् ॥ अपसव्येन । नित्यकुम्भदानम् ॥ ततोऽक्षयम् । पितरं वा मातरं एतत्ते एकोद्दि० दत्तमन्नमक्षयमुपतिष्ठतामिदमन्नमक्षयमुपतिष्ठतु ॥ नाशिषो वृणायात् ॥ सव्येन । ओंगायत्र्यै नमः ३ अपसव्येन ॥ देवताभ्यः ३ अद्यतावत् पितुः आद्यमौर्ध्वदैहिकं प्रथमं एकोद्दिष्टंश्राद्धं वैश्वदेवाष्टकापूर्वकं सान्वष्टक्यं ब्राह्मणपूजनमच्छिद्रं सम्पूर्णमस्तु एवमस्तु ॥ विमुच्य । नयाग्निं सव्येनाऽग्निं परिसमूह्य पर्युक्ष्य ६। केचिदत्रैवान्वष्टकां कुर्वन्ति ॥ अपसव्येन । आदौ नित्यकुम्भं समापयेत् । अद्यतावत् पितः एकोद्दिष्टे श्राद्धे तस्य परलोके क्षुत्पिपासादिपीडानिवारणार्थं सोदकुम्भा-

न्नदानसहिते नित्यकुम्भे एतत्ते तिलोदकमेतत्ते उदकतर्पणम् ॥ पुनः अद्यतावत् पितः एतत्ते तिलोदकमेतत्ते उदकतर्पणम् ॥ सव्येन। ततोगवां ग्रासादि। या काचिद्यो०। सौरभेया०। योऽस्मिन्निवसति०। अपसव्येन। तद्विष्णोरिति प्रतिपिण्डं पुष्पद्वयम् ॥ अथान्वष्टका। सव्येन। विमुञ्चामि ३ पुनः अग्निं परिसमूह्य पर्युक्ष्य ॥ "गेहाग्नेर्दक्षिणतस्तिस्रः कर्षूः दक्षिणायताः पूर्वापराः प्रादेशमात्रीश्चतुरङ्गुलपृथ्वीस्तावदन्तरास्तावदऽवखातास्तासां दक्षिणतः खरांश्च संस्थाप्य ॥" अपसव्येन। इदं पित्रे शृतमभिघार्य। प्रक्षाल्य मूलतो मेक्षणमवदधाति। अग्नावधिश्रित्य तत्रचाभिघार्य दक्षिणात उद्वास्य पुनश्चाभिघार्य ॥ सव्येन। गेहाग्नेरग्निमुद्धृत्य। अपसव्येन। खराग्निं प्रणयेत्। यं यं प्रणयेत्तंतं। सव्येन परिसमूह्य

पर्युक्ष्य ६ इत्येतत्साधनाङ्गं कुर्यात् कृत्वा च॥ पुनः गेहाग्नेरग्निमुद्धृत्य । अपसव्येन । प्रणयेत्। सव्येन परिसमूह्य पर्युक्ष्य ६ । पुनः तृतीयं गेहाग्नेरग्निमुद्धृत्य स्थापयित्वा प्रथमं गेहाग्निमेव परिसमूह्य पर्युक्ष्य ६ अपसव्येन प्रणयेत् । सव्येन परिसमूह्य पर्युक्ष्य ६ अपसव्येन त्रयाणामपि खराग्नीनां प्रत्येकं परिसमूह्य पर्युक्ष्य परिषिच्य ६ दक्षिणपश्चिमाग्रैःस्तरैःस्तृणामि यज्ञस्य० एतद्धोमाङ्गं कथ्यत । द्वितीयस्य ६ तृतीयस्य च कृत्वा। ततोऽवेक्ष्य कर्षाः ३ । कर्षूषु दक्षिणाग्रान्दर्भानास्तीर्य । तिलजलैरभ्युक्ष्य । प्रणवं मनसा ध्यात्वा खराग्निष्वाहुतिद्वयं द्वयं पितृयज्ञे जुहुयात् ओंओं २ । ततोऽर्धचरुमुद्धृत्य । तिलास्तोयं । कर्षूषु त्रिषु पिण्डत्रयं दद्यात् । एतत्ते तत वा मातः ३ । अ-

प उपस्तरण ३ प्रथमासन्नस्यान्नेन पूरयेत् । दधि-
मधुभ्यामिति द्वितीयाम् । घृतमांसेन शृतेन श्रापाके-
नेति तृतीयाम् ॥ पुंसां मज्जां स्त्रीषु सुरां विवर्जयेत्
मज्जामुपनिनीय ३ वोपनयेत् ॥ गौडी पैष्टी तथा
माध्वी विज्ञेया त्रिविधा सुरा । यथैवैका तथा सर्वा
न पातव्या द्विजातिभिः ॥ सुरामुपनिनीय ३ वोपनयेत्
दुग्धेन क्षीरेण दुग्धेनाभितः परिषिच्य ३। सक्तवः
सर्पिषाऽभ्यक्ताः क्षीरोदकपरिप्लुताः । नातिद्रवा ना-
तिघना मन्थाइत्यभिधीयते । मन्थेनाभितः परिषि-
च्य ३ ये चात्र सन्निहिताः स्युर्दधिमधुघृतादयः तै-
रपि परिषिच्य ॥ एतत् भवते (वा) भवत्यै ३॥ तृप्यतु
भवान् (वा) भवती ३॥ अत्र पितः (वा) मातर्मा-
दयस्व ३ अन्त्ये स्वरे मेक्षणं त्याज्यम् ॥ सव्येन
उदङ्ङासीनः प्राणायामः । नमो वः पितरो म-

न्यवे इत्युपस्थानम् ॥ अपसव्येन खराग्नीन्विमुच्य
परिस्तरणान्यनुप्रहृत्य प्रत्येकस्य पुष्पम् । अग्न आ-
यूंषि, १ अग्निर्ऋषिः, २ अग्ने पवस्व ३ ॥ तेजोसि ते-
जो मयि देहीति ॥ सव्येन गेहाग्निं परिसमूह्य प-
र्युक्ष्य परिषिच्य ६ परिस्तीर्य ४ अग्नये स्वाहा, प्रजा-
पतयेस्वाहेत्यादिधारणाः "पक्षयागसंस्थापने" पात्रिका
दत्त्वा। विमुच्य । नयामि । पुनः परिसमूह्य पर्युक्ष्य ६ ।
अचित्याग्निश्चिकिति ॥ पक्षयागत्यागे तु अग्नये स्वाहा
प्र०, सू०, प्र०, इति चतुष्टयमेव दत्त्वा । विमुञ्चामि
नयामि । धर्म देहि ॥ कलशपूच्छां विसर्ज्य ॥ य-
वोदकं नमः । आपन्नोस्मि । क्षमध्वं । नमो ब्र-
ह्मणे । बलिः विभीषणो । आरूचिं स्थापयित्वा ।
पात्राणि चालयेत् ॥ सव्येनाचम्य । उदकलशं ।
अपसव्येन । अद्यतावत् पितुः तस्य परलोके पाद-

दाहादिदोषनिवारणार्थं तृणासनं तृणपादुकं काष्ट-
पादिकां अग्निभाण्डं दण्डं च ददानि ॥ सव्येन।
अनन्तशाखकल्पाय ॥ इत्यकोद्दिष्टश्राद्धविधिः ॥
प्रथममासिके द्वितीये इत्यादि पृथक् पृथक् मासि-
केषु गोप्रदानं विनैवमेव सर्वं कार्यम् । ऊनषाण्मासिके
नवमे तु छत्रदाननौकादानौ चाधिकौ । कलशेऽपिछत्र-
दानार्थं च चतुर्वेदेश्वररेखा चोल्लख्या । प्रदानेष्वपि ।
इन्द्रं कुत्सो वृत्रहणं । अग्निमीळे। इषे त्वोर्जे त्वा।
अग्न आयाहि..। शन्नो देवी । इति विशेषः ॥ ॥
अथैकधा उद्वाहाष्टकयोर्विधिः॥ पात्रं तिला० पुर-
स्तात्० व्याहृति० हन्त मनुष्येभ्यः सनकादिभ्य
आचमनीयं नमः। पुनरग्निं परिसमूह्य ६ आदौ प०
श्च०। अपूपचरौ अग्नये वायवे सूर्याय ब्रह्मणे प्रजापतये
कूष्मार्षिभ्यः॥ अक्षतचरौ। अग्नये पुष्टिपतये प्रजापत-

ये ॥ अपूपचरौ ॥ अग्नये शुचये अग्नये पवमानाय अग्नये तन्तुमते अग्नये पथिकृते ॥ अपूपचरौ अग्नये अष्टकादेवतायै जुष्टं निर्वपामि एवं प्रोक्षामि ॥ आज्यभागान्तम् । कूष्माण्डं तद्ब्राह्मणं च हुत्वा प्रधानं । तेजोसि । अग्नये स्वाहा वायवे सूर्याय ब्रह्मणे प्रजापतये कूष्मर्षिभ्यः स्वाहा ६ । स्रुवेणाज्यहोमः । अग्नये जनिविदे स्वाहा । आयुषः प्राणमित्येका० । तेजोसि । आकूतं चा । तेजोसि । बृहस्पतिपुरोहिता । स्रुवेण ऋता षडिति ॥ अग्निर्भूतानामित्येकविंशमधिपत्यीत जुहोति । हिरण्यगर्भ इत्यष्टाभिः ॐभूः स्वाहा । अग्न आयूंषि । अग्निर्ऋषि । अग्ने पवस्व ॥ अत्ततचरु ॥ अग्निं पुष्टिपतिं प्रजापतिं च यजेत । अग्निना रयिं १ प्रजापते २ ॥ तृतीयचरु ॥ उदग्ने शुचय । अग्ने पवस्व । त्वं नस्तन्तु । अग्नेनय ।

ष्टकाप्रधानं ऋतूनां पत्नी । ऋतस्य धामा । देवा ग्रावाणो ॥ अष्टकानुवाकौ तूखानामार्षम् ॥ इयमेव सा या १ छन्दस्वतीरुषसौ २ ऋतस्य पन्थामनु ३ चतुष्टोमम ४ पञ्चभिर्धाता ५ । ऋतुतिथिः । नैत्र घम् । घृतेन । तेजोसि । अग्ने त्वं पारयानव्येति च इळाभागं हुत्वा ॥ वैश्वानरेति पावमान्यब्राह्मणेन चोपस्थानम् । यद्देवा देवहेळनमित्यञ्जलिः । सौत्रामन्या तावत् ॥ वैश्वानरेण पूयमानेन चेति तर्पणम् । अनेन मन्त्रहोमेण अग्निः प्रीयतां अग्निः प्रीतोस्तु ६ ॥ हुतमेक्षणादि ॥ इत्येकधः उद्वाहाष्टकविधिः ॥ ॥

---

## अथ सपिण्डीकरणश्राद्धविधिः ॥

शालिचूर्णेन ब्रह्मकलशमुल्लिख्य त्रेशद्वयं च संस्थाप्य अभि नो देवी-वषट् ते विष्णा तावत् । अष्टका दानम् ऋतूनां पत्नी । ऋतस्य धामा । देवा ग्रवाणो ॥ ॐ तद्विष्णोः विष्णुपञ्चायतनदेवताभ्य नमः । अर्चन्तस्त्वा० ॥ यजमानमानीय । आसनशोधनं । अ नाभौ ॥ तीर्थे स्नेयं । यत्रास्ति माता । अद्यतावत् महागणपतये अष्टकादेवतायै विष्णुपञ्चायतनदेवताभ्यः । दीपोनमः धूपोनमः । अपसव्येन । समस्तमातापितृभ्यः दीपः स्वधा ॥ पुनः अद्यतावत् पितामहाय प्रपितामहाय वृद्धप्रपितामहाय दीपः स्वधा ॥ कुम्भो वनिष्ठुर्जनिता शचीभि । अद्यतावत् पितः वा मातः समानसापिण्डी-

करणे श्राद्धे एष ते दीपः ॥ सव्येन विष्णुपूजा-
दिसहितां कलशपूजां श्लोकतर्पणादि च विधाय वैश्व-
देवव्याहृत्यष्टकां च सम्पाद्य, उदङ्मुखांश्चतुरो ब्राह्म-
णान् पित्रर्थं त्रीन् प्रेतार्थमेकम् प्राङ्मुखौ द्वौ विश्वेदेवार्थं
चोपविश्य श्राद्धमारभेत् ॥ सव्येनाचम्य ॥ श्राद्धकाले
गयां ध्यात्वा ॥ शान्ताकारं भुजगशयनं ॥ ॐ
गायत्र्यै नमः ॐभूर्भुवःस्वः ३ अपसव्येन देवता-
भ्यः पितृभ्यश्च ३ अद्यतावत् पितामहस्य प्रपिता-
महस्य वृद्धप्रपितामहस्य पितुः अमुकस्यामुकगोत्रस्य
समानसपिण्डीकरणं "वा" सांवत्सरिकसमानसपिण्डी-
करणं वैश्वदेवाष्टकपूर्वकं सान्वष्टक्यं श्राद्धं ब्राह्मणपूज-
नमर्चासहं करिष्ये ओंकुरुष्व ॥ तिलान्विकीर्य । अग्निं
परिसमूह्य ६ निहन्मि सर्वं यदमेध्यवद्भवेद्धताश्च सर्वे
सुरदानवाः मया । रक्षांसि यक्षाः सपिशाचगुह्यका-

हता मया यातुधानाश्च सर्वे ॥ सव्येन । पुरू-
रस्यार्द्रवसोः विश्वेषां देवानामिदमासनं नमः,
रवाय आर्द्रवसवे विश्वेभ्यो देवेभ्यः ब्राह्मणांत्व
जयामि ओंभोजय । पुरूरवं आर्द्रवसुं विश्वा
वान् आवाहयिष्यामि ओंआवाहय । यवान्विक
आगच्छन्तु महाभागा विश्वेदेवा वरप्रदाः । ये
विहिताः श्राद्धे सावधाना भवन्तु ते ॥ शन्नोदेवी
लाजाश्च । भगवन्तः पाद्यं २ पुरूरवाय आर्द्रव
सवे विश्वेभ्यो देवेभ्यः पाद्यं नमः । शेषं निवार्य,
पुनः शन्नोदेवी । आपः क्षीरं । भगवन्तः अर्घ्य-
म् २ पुरूरव आर्द्रवसो विश्वेदेवा इदं वोर्घ्यं न-
मः ॥ पुरूरवाय आर्द्रवसवे समालभनं गन्धो नमः
अर्घो नमः पुष्पं नमः दीपो नमः धूपो नमः वासो
नमः । पुरूरवस्य आर्द्रवसोः विश्वेषान्देवानामर्घ्य-

ऽर्घ्यर्चनविधिः सर्वः परिपूर्णोस्तु ॥ ओमासश्च-
तो विश्वेदेवास आगत । दाश्वांसो दाशुषः
॥ उपयामगृहीतोसि विश्वेभ्यस्त्वा देवेभ्य
योनिर्विश्वेभ्यस्त्वा देवेभ्यः ॥ विश्वेदे-
गागत शृणुताम इमं हवम् । इदं बर्हिर्नि-
॥ आपः प्रदाय अपसव्यं कृत्वा ॥ पितामह-
प्रपितामहस्य वृद्धप्रपितामहस्य इदमासनं स्व-
॥ पितुः समानसपिरडीकरणे श्राद्धे एतत्ते
आसनम् । पितामहाय प्रपितामहाय वृद्धप्रपिताम-
ाय "वा" पितामह्यै प्रपितामह्यै वृद्धप्रपितामह्यै
ब्राह्मणं त्वां भोजयामि ओंभोजय । पितस्त्वं ब्रा-
ह्मणं त्वां भोजयामि पितामहं प्रेतसहितं, प्रपितामहं
प्रेतसहितं, वृद्धप्रपितामहं प्रेतसहितमावाहयिष्यामि
ओंआवाहय ॥ तिलान्विकीर्य पैत्र्य । श्राद्धानुवाको

तूखानामार्षम् अपयन्त्वसुराः पितृरूपा ये रूपाणि प्रति-
मुच्याचरन्ति परापुरो निपुरो ये हरन्ति अग्निष्टांल्लो-
कान्प्रणुदत्वस्मान् । अपेतो यन्त्वसुरा ये पितृषदः
उदीरतामवर उत्परास उन्मध्यमाः पितरः सोम्या-
सः असुं य ईयुरवृका ऋतज्ञास्तेनोऽवन्तु पित-
रो हव्येषु एत पितरो मनोजवैरागच्छन्त पितरो म-
नोजवैः ये निखाता ये परोप्ता गर्भाद्येऽवपेदिरे सर्वा-
स्तानग्न आवह पितृन्हविषे अत्तवे । आगच्छन्तु
पितरो मनोजवसः पितरः पितरः शुन्धध्वम् । आ
मे यन्तु पितरो भागधेयं विराजाहूताः सलिला-
त्समुद्रात् । अस्मिन्यज्ञे सर्वकामांल्लभन्तामत्त्रीयमा-
णानुपजीवत्वेनान् । अन्तर्दधे पर्वतैरन्तर्मह्या पृथि-
व्या दिवा दिग्भिरनन्ताभिरन्तरन्यान्पितृन्दधे ॥
अन्तर्दधे ऋतुभिरहोरात्रैः ससन्धिकैः अर्धमासैश्च

मासैर्ऋतुभिः परिवत्सरैः संवत्सरस्य क्लृप्तिभिश्चा-न्तरन्यान्पितृन्दधे ॥ अथ "प्रत्ये" अपयन्त्वसुराः पितृरूपा ये रूपाणि प्रतिमुच्याचरन्ति परापुरो निपरो ये हरन्ति अग्निष्टांल्लोकान्प्रणुदत्वस्मात्। अपेतो यन्त्व-सुरा ये पितृषदः उदीरतामवर उत्परास उन्मध्य-माः पितरः सोम्यास असुं य ईयुरवृका ऋतज्ञा-स्तेनोऽवन्तु पितरो हवेषु ॥ एहि पितर्मनोजवैराग-च्छ पितर्मनोजवैः ये निखाता ये परोप्ता गर्भादेऽ-वपेदिरे सर्वास्तानग्न आवह पितृन्हविषे अत्तवे ॥ आगच्छ पितर्मनोजवः पितः पितः शुन्धस्व आ मे यन्तु पितरो भागधेयं विराजाहूताः सलिलात्समुद्राव् अस्मिन्यज्ञे सर्वकामांल्लभतां अक्षीयमाणानुपजीवैना-न् ॥ अन्तर्दधे पर्वतैरन्तर्मह्या पृथिव्या दिवा दिग्भिर-नन्ताभिरन्तरन्यान्पितृन्दधे। अन्तर्दधे ऋतुभिरहो-

रात्रैः ससन्धिकैरर्धमासैश्च मासैर्ऋतुभिः परिवत्सरैः संवत्सरस्य क्लृप्तिभिरन्तरन्यान्पितॄन्दधे ॥ "पितृपात्रे" यास्तिष्ठन्ति या धावन्ति या अद्भुग्धाः परिसस्रुषीः अद्भिर्विश्वस्य धत्रीभिरन्तरन्यान्पितॄन्दधे। अमृता वागमृता आपोग्निर्वाचोऽमृतं तत्त्रिवृदेकधाम ताभिर्मत्प्रत्ताभिः स्वधया मदध्वम् । इहास्मभ्यं वसीयोऽस्तु देवा यन्मे माता प्रलुलोभ यश्चचारानन्नुव्रतं तन्मे रेतः पिता वृंक्तां माभूरन्योऽवपद्यताम् "इति प्रथमे १"। यास्तिष्ठन्ति—यन्मे पितामही—पितामहो वृंक्तां "इति द्वितीये २"। यास्तिष्ठन्ति—यन्मे प्रपितामही प्रपितामहो वृक्तां "इति तृतीय पात्रे ३" ॥ 'प्रेतपात्रे' यास्तिष्ठन्ति—स्वधया मदस्व—यन्मे माता—पिता वृंक्तां ॥ लाजाश्च। भगवन्तः "वा" भगवत्यः पाद्यं २ 'इति पितृषु'। भगवन् "वा" भगव-

-ति पाद्यं २। पितामहाय "वा" पितामह्यै प्रपिता०
वृद्धप्रपि०। पाद्यं स्वधा। पितः "वा" मातः समा-
नसपिण्डीकरणे श्राद्धे एतत्ते पाद्यम्। शेषं निवार्य।
सव्येनाऽचम्य ऽपसव्येन। यास्तिष्ठन्तीति षट्। या-
स्तिष्ठन्ति-यन्मे मातेति प्रथमे १ यास्तिष्ठन्ति-य-
न्मे माता। यन्मे पितामहीति द्वितीये २ यन्मे
माता। यन्मे पितामही। यन्मे प्रपितामहीति
तृतीये ३। यास्तिष्ठन्ति-स्वधया मदस्व-यन्मे मा-
तेति प्रेतपात्रे॥ आवाहनं तथा चार्घं पिण्डदाने त-
थाक्षये। चतुर्षु प्रक्षिपेत्प्रेतं पितृयज्ञे विधानतः॥ गन्धो
दकतिलैर्मिश्रं कुर्यात्पात्रचतुष्टयम्। अर्घ्यार्थं पितृपात्रे-
षु प्रेतपात्रं प्रसेचयेत्॥ धातुत्रयेण सह प्रेतपात्राज्जलं
निष्कर्षयित्वा। सं सृजतु त्वा पृथिवीवायुरग्निः प्र-
जापतिः संसृजध्वं पूर्वेभिः पितृभिः सह। ये स-

मानाः सुमनसः पितरो यमराज्ये तेषां लोके स्वधा नमो यज्ञो देवेषु कल्पताम् । ये समाना सुमनसो जीवा जीवेषु मामकाः । तेषां श्रीर्मयि कल्पतामस्मिल्लोके शतं समाः । समाना व आकूतानि समाना हृदयानि वः समानमस्तु वो मनो यथा वः समहासति । सं वो मनांसि संव्रताः समुच्चितान्याकरत् । अमी ये विव्रताः स्थ नस्तान्वः सन्नमयामसि वसुभ्यः स्वधेति प्रथमे । एवं संसृजतु त्वा—रुद्रेभ्यः स्वधेति द्वितीये । सं सृजतु—आदित्येभ्यः स्वधेति तृतीय । चतुर्ष्वपि । आपः क्षीरं । भगवन्तोर्घ्यं २ भगवन्नर्घ्यं २ पितृपितामहौ समानसपिण्डीकरणे श्राद्धे इदं वामर्घ्यं स्वधा "एवं" पितृप्रपितामहौ । पितृवृद्धप्रपितामहौ समान० । प्रेतपात्रात् पितः समानस० इदं ते अर्घ्यम् ॥ पितामहाय स-

मालभनं गन्धः स्वधा । पितः समानस-एष ते
गन्धः ॥ सव्येनाचम्यापसव्येन । पितामहाय अर्घः
स्वधा पुष्पं स्वधा । पितः समानस-एष तेऽर्घः
एतत्ते पुष्पम् । पितामहाय दीपः स्वधा, धूपः स्व-
धा । पितः समानस-एष ते दीपः एष ते धूपः ॥
पितामहाय वासांसि स्वधा । पितः समान-एत-
त्ते वासः ॥ दक्षिणाग्रान्दर्भानास्तीर्य सव्येन शु-
न्धन्तां लोकाः । अपसव्येन । पितृषदनाः पितृषदनम-
सि पितृभ्यः स्थानमसि । पितृभ्यः गन्धादि-वा-
सोन्तम् । पितामहस्य-अर्घ्यदानाद्यर्चनविधिः सर्वः
परिपूर्णोस्तु ॥ आदित्या रुद्रा वसवो मे सदस्या-
स्तेषां सख्ये सुधया मदध्वं सुधां वहध्वममृतस्य
योनिं याऽत्र स्वधा पितरस्तां भजध्वम् ॥ इति
पितृब्राह्मणेषु ॥ पितुः समानस-एष तेऽर्घ्यदानाद्य-

र्चनविधिः सर्वः परिपूर्णोऽस्तु ॥ वसवो मे सदस्यास्तेषां सख्ये सुधया मदस्व । सुधां वहस्व अमृतस्य योनिं याऽत्र सुधा पितस्तां भजस्व ॥ इति प्रेतब्राह्मणे । सव्येन । इदमन्नं देवेभ्यः शृतमभिघार्य । अपसव्येन । इदमन्नं पितृभ्यः शृतमभिघार्य । इदं पित्रे शृतमभिघार्य । विष्णोर्मनसा पूते स्थ इति द्वयोर्दर्भे पवित्रमुन्मृज्यावस्थाप्य प्रक्षाल्य मूलतो मेक्षणमवदधाति ॥ श्रियै सोमवत्यै गन्धादि श्रियं देवी० । अग्नावधिश्रित्य तत्रचाभिघार्य दक्षिणत उद्वास्य पुनश्चाभिघार्य*। दक्षिणपश्चिमाग्रैः स्तरैः यज्ञस्य सन्ततिरसीति स्तृणीयात्×। अग्नौ करवाणि ॐकुरु इत्युक्त्वा । पितृचरोः । ॐसोमाय पितृमते स्वधानमः ॐअग्नये कविवाहनाय स्वधानमः २ इत्यग्नौ आहुतिद्वयं दत्त्वा । तूष्णीं

पितृब्राह्मणपात्रेषु निक्षिपेत् ॥ ये मामकाः पितरः पार्थिवासो ये अन्तरिक्षे ये दिवि ये समुद्रे ये वाचमाप्त्वा अमृता बभूवुस्तेऽस्मिन्यज्ञे सर्वकामां-ल्लभन्ताम् । एतद्वः पितरो भागधेयं पात्रेषु द-त्तममृतं स्वधावत् । अक्षीयमाणमुपजीवत्वेनं मया प्रत्तं सुधया मदध्वम् । अयं यज्ञः परमोयः पितृ-णां पात्रेषु देयं हविरध्यमग्नेः । मनश्च वाक्च पितरो वः प्रदानैरश्विभ्यां प्रत्तं सुधया मदध्वम् । एषा व ऊर्गेषा वः स्वधा तामत्त च पिवत च मा च वः क्षिष्ठ येह पितर ऊर्देवतासु तस्यै वयं ज्योग्जी-वन्तो भूयास्म आ मा स्वपक्कममृतं निविष्टं मया प्रत्तं सुधया मदध्वं क्षीरं घृतं वासिच्य ॥ "प्रेतचरोः" । प्रणवं मनसा ध्यात्वा "ॐॐ" इत्याहुतिद्वयमग्नौ हुत्वा । तूष्णीं प्रेतब्राह्मणपात्रे निक्षिपेत् ॥ ये-

मामकाः पितरः पार्थिवासो ये अन्तरिक्षे ये दि-
वि ये समुद्रे ये वाचमाप्त्वाऽमृतावभूवुः । तेऽ-
स्मिन्यज्ञे सर्वकामांल्लभन्तां । एतत्ते पितर्भागधेयं
पात्रेषु दत्तममृतं सुधावत् । अक्षीयमाणमुपजीवैनं मया
प्रत्तं सुधया मदस्व । अयं यज्ञः परमो यः पितुः
पात्रे देयं हविरग्र्यमग्नेः । मनश्च वाक्च पितस्ते प्र-
दानैरश्विभ्यां प्रत्तं सुधया मदस्व । एषा त ऊर्गेषा
ते सुधा तामद्धि च पिब च मा च ते क्षेष्ठ । येह
पितऊर्ग्देवतासु तस्यै वयं ज्योग्जीवन्तो भूयास्म ।
आमास्व पक्वममृतं निविष्टं मया प्रत्तं सुधया म-
दस्व क्षीरं घृतं वासिच्य ॥ सव्येन । वैश्वदेवह-
विषे पिन्वमानं विश्वेषु भूतेषु पृथग्निविष्टं मया प्रत्तं
सुधया मदध्वं क्षीरं घृतं वासिच्य ॥ विश्वेभ्यो
देवेभ्योऽन्नं नमः अन्नं नमः अन्न मधु २ पृथिवी

ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखेऽमृतं जुहोमि
ऊर्गऽस्योर्जोदा ऊर्जं मे देहि ऊर्जं मयि धेहि अन्नं
मे देह्यन्नं मयि धेहि अक्षितिरसि मा मे क्षिष्ठा-
ऽमुत्रामुष्मिंल्लोक इह च ॥ इदं विष्णुर्विचक्रमे त्रे-
धा निदधे पदम् । समूढमस्य पांसुरे ॥ त्रीणि पदा
विचक्रमे विष्णुर्गोपा अदाभ्यः । अतो धर्माणि धार-
यन् । विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पृशे ।
इन्द्रस्य युज्यः सखा ॥ तद्विष्णोः परमं पदं । विष्णो
हव्यं रक्षस्व ॥ विश्वेभ्योदेवेभ्योयथोपस्थितं दत्तं
दास्यमानेन सह सव्यञ्जनममृतमन्नं नमः । नमो
देवेभ्यः । अप सव्येन । पितामहायाऽन्नं स्वधानमः ३
प्रपितामहायाऽन्नं स्वधानमः ३ वृद्धप्रपितामहायाऽन्नं
स्वधानमः ३ । अन्नं मधु २ । इदं विष्णुर्विं । विष्णो
इदं रक्षस्व ॥ पितामहाय यथोपस्थितं दत्तं-अमृ-

तमन्नं स्वधा । स्वधा पितृभ्यः । प्रेतपात्रे । पितः समानस-एतत्तेऽन्नमेतत्तेमधु-इदं विष्णु-विष्णो इदं रक्षस्व ॥ पितः समानस० यथोपस्थितममृतमन्न-मेतत्तेऽन्नम् ॥ सव्येन । पयः पृथिव्याः । दधि क्राव्णो । घृतवतीर्भुवनाना । मधुवाता ऋतायते । शर्कराभिरवकामव । पञ्चव्युष्टीरनु । पुरुषमेधः पुरुषस्य । सहस्रशीर्षा० । हिरण्यवर्णा हरिणी ॥ तद्विष्णोः ॥ श्राद्धब्राह्मणं च ॥ अपसव्येन । ये केचिद्यत्र तत्रस्थाः प्रेतभागवशानुगाः । इति प्रेतभागं दत्त्वा । अद्यादिनेऽद्ययथासंकल्या । सव्येन । शन्नोदेवी । पुरूरवायार्द्रवसवे विश्वेभ्योदेवेभ्योऽपोशानं नमः ॥ अपसव्येन । यास्तिष्ठन्ति-सुधया मदध्वम् । पितामहायादिभ्योऽपोशानं स्वधा । यास्तिष्ठन्ति-सुधया मदस्व । पितः समान-एतत्तेऽपोशानं । तिलमन्नं

च पानीयं सकुशं तेषु चाक्षतः । विकिरेत्पितृभूतेभ्यो जपन्नपहता इति । पितृपाके । अपहता असुरा रक्षांसि पिशाचा येक्षिषदः प्राश्नन्तु भवन्तोऽमृतं जुषध्वममृतं भुञ्जीत ॥ प्रेतपाके । प्राश्नातु भवान् अमृतं जुषस्वामृतं भुंक्ष्व ॥ सव्येन । यन्मे प्रकामा इति पितृब्राह्मणान् समीक्षमाणो जपति ॥ यन्मे प्रकामादुत वाप्यकामाद्ऽसमिद्धे ब्राह्मणेऽब्राह्मणे वा । यत्स्कन्दति निर्ऋतिः पाथसुग्रासम्निष्टत्सर्वं शुन्धतु उशन्तस्तेन पितरो मदन्तां तेन पूतेन पितरो मादयन्ताम् । अहोरात्रैः ससन्धिकैरर्धमासैश्च मासैर्ऋतुभिः परिवत्सरैः संवत्सरस्य क्लृप्तिभिरन्तरन्यान्पितॄन्दधे । यद्वः प्रैत्ये । यत्ते क्रव्यादजहादेकमङ्गं पितृलोकं जनयञ्जातवेदाः । तद्व एतेन पुनराप्यायतामरिष्टासः पितरो मादयध्वम् ।

स्वधां वहन्तममृतस्य योनिं यात्र सुधा पितरस्तां भजध्वम् (प्रेत्ये) पितस्तां भजस्व ॥ नारायणस्यार्षम् । मधुवाता ३ अन्तश्चरसि । ब्रह्मार्पणं । अपसव्येन । द्वयोर्भूप्रदेशयोः । दक्षिणाग्रान्दर्भानास्तीर्य । यास्तिष्ठन्ति । पितामहादिभ्यो भूपृष्ठेऽवनेजनं स्वधा । उशन्तस्त्वा हवामह उशन्तः समिधीमहि । उशन्नुशत आवह पितॄन्हविषे अत्तवे ॥ प्रेत्ये । यास्तिष्ठन्ति । पितः समानसपिण्डी एतत्तेऽवनेजनम् । उशन्तस्त्वा पितरं हविषे अत्तवे ॥ पितृचरोरन्नमुद्धृत्य । तिलास्तोयं । देवताभ्यः ३ अद्यतावत्, पृथिवी दर्विरक्षिता तृप्तिः स्वधाऽनुपदस्तां तां पृथिवीं दर्विमक्षितां तृप्तिं सुधामनुपदस्तां तामग्निरिव पृथिवीमुपजीव पितामह एष ते पिण्डः ये चात्र त्वान्वेषा ते स्वधा वसुभ्यः स्वधा षष्ट एष ते लेपः । अप

उपस्पृश्य ॥ १ ॥ अन्तरिक्षं दर्विरक्षिता तृप्तिः स्वधाऽनुपदस्तां तामन्तरिक्षं दर्विमक्षितां तृप्तिं स्वधामनुपदस्तां वायुरिव अन्तरिक्षमुपजीव प्रपितामह अमुकामुकगोत्र एष ते पिण्डः येचात्र त्वान्वेषा ते स्वधा रुद्रेभ्यः स्वधा पञ्चम एष ते लेपः । अप उपस्पृश्य ॥ २ ॥ द्यौर्दर्विरक्षिता तृप्तिः स्वधाऽनुपदस्तां तां दिवं दर्विमक्षितां तृप्तिं स्वधामनुपदस्तां सूर्य इव दिवमुपजीव वृद्धप्रपितामह एष ते पिण्डः येचात्र त्वन्वेषा ते स्वधा आदित्येभ्यः स्वधा चतुर्थ एष ते लेपः । अप उपस्पृश्य ॥ ३ ॥ मूलपुरुषा भूमिस्वामिनः पितरः! एष वः पिण्डः स्वधा, येच वोऽन्वऽत्र पितरो मादयध्वम् । येत्र पितरः प्रेता यूयं तेषां वसिष्ठा भूयास्थ य इह पितरो जीवा वयं तेषां वर्षिष्ठा भूयास्म ॥×एतानि वः पितरो

वासांसि । अतो नोन्यत्पितरो मा यूढं । वीरान्नः पितरो दत्त पिण्डलेपं निवारयेत् ॥ ततः प्रेतचरो ग्न्नमुद्धृत्य ॥ तिलास्तोयं । देवताभ्यः ३ अद्य-तावत्, पृथिवी दर्विराक्षिता तृप्तिः स्वधानुपदस्तां तां पृथिवीं दर्विमक्षितां तृप्तिं स्वधामनुपदस्तां ता-मग्निरिव पृथिवीमुपजीव पितरमुकामुकगोत्र समा-नसपिण्डीकरणे श्राद्धे एष ते पिण्डः । अप उप-स्पृश्य ॥ मूलपुरुषा—अत्र पितर्मादयस्व । एतत्ते वासः । वीरान्नः पितर्धेहि । पिण्डलेपं निवारयेत् ॥ पितामहादिभ्यः समालभनं गन्धः स्वधा । अर्घः स्वधा पुष्पं स्वधा दीपः स्वधा धूपः स्वधा भ-क्ष्यभोज्यफलमूलबलिनैवेद्यमाहारादि अन्नं स्वधा । तिलमधुमिश्रमुदकपात्रमाचमनीयं जलं स्वधा हि-मपानादि स्वधा ॥ पितः समानसपि—एष ते ग-

न्धः, एष तेऽर्घः एतत्ते पुष्पम् । एष ते दीपः एष ते धूपः एष ते भक्ष्यभोज्यफलमूलबलिः । एतत्ते तिलमधुमिश्रमुदकपात्रमाचमनीयम् । एतत्ते हिमपानादि ॥ सव्येन । वसन्ताय नमः ६ । अपसव्येन । यास्तिष्ठन्ति । ऊर्जं वहन्तीरमृतं घृतं मधु पयः कीलालं परिस्रुतं स्वधास्थ पितॄन्मे तर्पयत ॥ पुनः यास्तिष्ठन्ति । ऊर्जं वहन्ती—स्वधास्थ पितरं मे तर्पयत ॥ ततः प्रेतपिण्डे प्रेतस्वरूपं ध्यात्वा तद्विष्णोरिति पुष्पद्वयं दत्त्वा ॥ "दत्त्वा पिण्डमथाष्टाङ्गं ध्यात्वा प्रेतं सुभास्वरम् । सौवर्णरौप्यताम्रैश्च तंतुभिर्विभजेत्त्रिधा ॥" पिण्डं पितामहादीनां पिण्डेभ्यः प्रैतमर्पयेत् । अर्घैः पुष्पैस्तथा दीपैर्धूपैर्वस्त्रानुलेपनैः ॥ "त्रैधं करिष्ये" इत्युक्त्वा "ॐ कुरुष्व" इति ब्राह्मणवाक्यं श्रुत्वा । तं पिण्डं सौवर्णरौप्यताम्रयु-

तैदर्भैयथाक्रमं विभज्याधस्तनभागं वसुपिण्डे, मध्यम-भागं रुद्रपिण्डे, ऊर्ध्वभागमादित्यपिण्डे निधाय । संसृ-जेत् ॥ अर्घ्योदकसंसर्गवत्पिण्डसंसर्गः ॥ मधु चाज्यं जलं चार्घः पुष्पं धूपं विलेपनम् । बलिं दद्याच्च विधि-वत्पिण्डोष्टाङ्गो भवेद्यथा ॥ तिलास्तोयं । संसृजतु त्वा—वसुभ्यः स्वधा ॥ देवताभ्यः ३ अद्य तावत् । पृथिवी दर्विरक्षिता—अग्निरिव पृथिवीमुपजीवतं पि-तृपितामहौ एष वां पिण्डो ये चात्र वामन्वेषा वां स्वधा वसुभ्यः स्वधा सप्तम एष वां लेपः । अप उ-पस्पृश्य ॥ १ ॥ एवं । संसृजतु त्वा—रुद्रेभ्यः स्वधा देवताभ्यः ३ अद्यतावत्—अन्तरिक्षं दर्विरक्षिता—वा-युरिव अन्तरिक्षमुपजीवतं पितृप्रपितामहौ एष वां पिण्डो येचाऽत्रवामन्वेषा वां स्वधा रुद्रेभ्यः स्वधा षष्ठ एष वां लेपः । अप उपस्पृश्य ॥ २ ॥ संसृजतु

त्ता—आदित्येभ्यः स्वधा ॥ देवताभ्यः ३ अक्षतावत् द्यौर्दर्विरक्षिता—सूर्य इव दिवमुपजीवतं पितृवृद्धप्रपितामहौ एष वां पिण्डो ये चात्र वामन्वेषा वां स्वधा आदित्येभ्यः स्वधा पञ्चम एष वां लेपः अप उपस्पृश्य ॥ ३ ॥ स्त्रीविषये । पृथिवीदर्विरक्षिता मातृपितामह्यौ । अन्तरिक्षं दर्वि—मातृप्रपितामह्यौ । द्यौर्दर्वि—मातृवृद्धप्रपितामह्यौ । बहुवचने तु । पृथिवी दर्वि—अग्निरिव पृथिवीमुपजीवत मातृपितामह्यः एष वः पिण्डो ये चात्र वोन्वेषा वः स्वधा वसुभ्यः स्वधा सप्तम एष वां लेपः । अन्तरिक्षं दर्वि—वायुरिवान्तरिक्षमुपजीवत मातृप्रपितामह्यः एष वः पिण्डो ये चात्र वोन्वेषा वः स्वधा रुद्रेभ्यः स्वधा षष्ठ एष वो २ द्यौर्दर्वि—सूर्य इव दिवमुपजीवत मातृवृद्धप्रपितामह्यः एष वः पिण्डो ये चात्र वोन्वेषा वः स्वधा पञ्च-

म एष वो ३ । मूलपुरुषा—अत्र पितरो मादयध्वम् । वीरान्नः पितरो दत्त ३ । पिण्डलेपं निवारयेत् । पितृपितामहाभ्यां पितृप्रपितामहाभ्यां पितृवृद्धप्रपितामहाभ्यां समानसपिण्डीकरणे श्राद्धे समालभन्नं गन्धः स्वधा । अर्घः स्वधा पुष्पं स्वधा दीपः स्वधा धूपः स्वधा । भक्ष्यभोज्यफलमूलबलिनैवेद्यमाहारादि अन्नं स्वधा । तिलमधुमिश्रमुदकपात्रमाचमनीयं जलं स्वधा । एतद्वां हिमपानादि स्वधा ।* स्त्रीविषये मातृपितामहीभ्यां । बहुवचने । मातृपितामहीभ्यः ।।*सव्येनाचम्य ।। वसन्ताय नमः ६ अपसव्येन । यास्तिष्ठन्ति । ऊर्जवहन्ती । आरुचिमऽभिमन्त्र्य । अद्यतावत् पितः समान पाथेयं नित्यान्नम् ।। सव्येन। मा मेत्तेष्ठा बहु मे पूतमस्तु ब्रह्माणो मे जुषतामन्नमन्नम् । सहस्रधारममृतोदकं मे पूतमस्त्येतत्परमे

व्योमन् । देवतायै बलिमुपहरेत् । सावित्राणि पितृ-
गणदेवताभ्यः ब्रह्मणे ॐनमो नैवेद्यं ॥ अपसव्येन ।
सर्वमन्नमुपादाय सतिलं दक्षिणामुखः । वारिणा-
साव्य तच्चान्नं पृच्छेत्प्रश्नत्रयं द्विजः । पितृब्राह्मणेषु ।
विषदमन्नमानीय । कश्चित्सम्पन्नं भोः सुसम्पन्नं १ ।
तृप्यन्तु भवन्तः तृप्ताः स्मः २ । शेषमन्नमिष्टैः सह ३ ।
अग्निदग्धाश्च ये जीवा येप्यदग्धाः कुले मम ।
भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिम् ॥
येषां न पचते माता येषां न पचते पिता । उच्छि-
ष्टं येच कांक्षंति तेषां तृप्तिः स्वधा नमः ॥ प्रेतब्र-
ह्मणे तिलदर्भक्षीरेण । स्वादितं १ सुस्वादितं तृ-
प्यतु भवान् वा भवती २ तृप्तोस्मि वा तृप्ता-
स्मि प्रेतस्तृप्यतु ३ ॥ सव्येन । असोमपाश्च ये
जीवा यज्ञभागविवर्जिताः । तेषामन्नं प्रदास्यामि वि-

किरं वैश्वदेवके ॥ तृप्तानाचम्य । अपसव्येन । पितामहाय आचमनीयं स्वधा ॥ पितः समानसपि० एतत्ते आचमनीयम् । सव्येन । विश्वेभ्यो देवेभ्यः आचमनीयं नमः ॥ अपसव्येन । यन्मे रामइत्यर्घप्रदक्षिणं कृत्वा प्रत्येत्य ॥ यन्मे रामः शकुनिःश्वापदाश्च यन्मे शुचिर्मन्त्रकृतस्य प्राशत् । वैश्वानरः सविता तत्पुनातु तस्मिन्पूते देवता मादयन्तां तेन पूतेन पितरो मादन्ताम् ॥ यास्तिष्ठन्ति । पितामहाय दक्षिणायै । अभिरमन्तु भवन्तः अभिरताःस्मः देवाश्च पितरश्चैतत्पूतमत्रोपजीवतामस्मिल्लोके मां धत्त जीवेम शरदः शतं पश्येम शरदः शतम् । अथास्मभ्यमूर्जं धत्त ज्योतिर्धत्ताऽजरं न आयुः ॥ यदन्तरिक्षं पृथिवीमुत द्यां यत्पितरं मातरं वा जिहिंसिम । अग्निर्नस्तस्मादेनसो गार्हपत्यः प्रमुञ्चतु चकृम यानि दुष्कृता ॥ तृप्य-

न्तु भवन्तः पितामहा येच भवतोऽनु येचास्मास्वाशंसन्ते तृप्यत १ तृप्यन्तु भवन्तः प्रपितामहा येच भ २ तृप्यन्तु भवन्तः वृद्धप्रपितामहा येच ३ । स्त्रीविषये तृप्यन्तु भवत्यः पितामह्यो याश्च भवतीरनु याश्चास्मास्वाशंसन्ते तृप्यत १ तृप्यन्तु भवत्यः प्रपितामह्यो याश्च २ तृप्यन्तु भवत्यः वृद्धप्रपितामह्यो याश्च ३ ॥ तृप्यंतु ३ एवमस्तु ॥ प्रेत्य । यास्तिष्ठन्ति । पितः समान—एतत्ते दक्षिणार्थं तिलहिरण्य० ददानि । अभिरमतु भवान् अभिरतोस्मि देवाश्च—यानि दुष्कृता । प्रथमं जलकुम्भं । कलशं शुभदं दिव्यं । अद्यतावत् पितः समान-तस्य परलोके क्षुत्पिपासादिनिवारणार्थमिमं जलकुम्भं सहिरण्यं सवाससं सान्नं ददानि ३ प्रतिगृह्णामि ३ नित्यकुम्भं च दत्त्वा । पात्रचतुष्टयं प्रकल्प्य । गन्धोअक्षय्यं साध्यं यथा ।

दकतिलैर्मिश्रं कुर्यात्पात्रचतुष्टयम् । निदध्यात्पितृपात्रेषु प्रेतपात्रं प्रसेचयेत् ॥ संसृजतु त्वा—वसुभ्यः स्वधा १ संसृजतु त्वा—रुद्रेभ्यः स्वधा २ संसृजतु त्वा—आदित्येभ्यः स्वधा ३ ॥ पितृपितामहयोः समानस० एतद्दत्तमन्नमक्षय्यमस्तु स्वधा इदमन्नमक्षय्यमस्तु स्वधा १ एवं पितृप्रपितामहयोः समान २ पितृवृद्धप्रपितामहयोः समान ३ ॥ स्त्रीविषये । मातृपितामह्योः समान १ मातृप्रपितामह्योः २ मातृवृद्धप्रपितामह्योः ३ बहुवचनं । मातृपितामहीनां । प्रत्येकपितरं समान-एतद्दत्तमन्नमक्षय्यमुपतिष्ठता मिदमन्नमक्षय्यमुपतिष्ठतु । दातारो नोऽभिवर्धन्तां वेदाः सन्ततिरेव च । श्रद्धा च नो मा व्यगमद्बहु देयं च नो अस्तु । अन्नं च नो बहु भवेदतिथींश्च लभेमहि । याचितारश्च नः सन्तु मा च याचिष्म कंचन

एता एवाशिषः सत्याः सन्त्विति विप्राः प्रतिब्रूयुः ॥
नाशिषः प्रेतब्राह्मणेभ्यः। सव्येन शन्नो देवी। विश्वेभ्यो
देवेभ्यः दक्षिणायै। विश्वेदेवाः प्रीयन्तां प्रीताः स-
न्तु ॥ शन्नो भवन्तु वाजिनो हव्येषु देवताता मि-
तद्रवाः स्वर्काः। जम्भयन्तोहिवृकं रक्षांसि सनेम्य-
स्मद्यूयमनमीवाः सस्रावपात्रमुत्तानं कृत्वा ताभिरद्भिः
पुत्रकामो मुखमनक्ति ॥ वाजे वाजे कुशाविसर्जनम्
वाजे वाजे वत वाजिनो नो धनेषु विप्रा अमृता
ऋतज्ञाः। अस्य मधु पिवत मादयध्वं तृप्ता यात
पथिभिर्देवयानैः ॥ अपसव्येन। आ मा वाजस्ये-
ति पिण्डपात्रेषु कः आ मा वाजस्यप्रसवोजगम्या
दा मा द्यावापृथिवी विश्वरूपे। आ माऽगन्तां पि-
तरं मातरं चाम्ना सोमो अमृतत्त्वेन गम्यात् ॥
सव्येन। गायत्र्यं मनः ३ अपसव्यन देवताभ्यः ३

अद्यतावत पितामहस्य प्रपितामहस्य वृद्धप्रपितामहस्य पितुः समानसपिण्डीकरणं वैश्वदेवाष्टकापूर्वकं सानुष्टक्यं श्राद्धं ब्राह्मणपूजनमच्छिद्रं सम्पूर्णमस्तु एवमस्तु ॥ विसृज्य । नयामि ॥ सव्येन पुनरग्निं परिसमूह्य पर्युक्ष्य ६ । अपसव्येन । पितामहाय० तिलोदकं स्वधा उदकतर्पणं स्वधा ॥ नित्यकुम्भेन तु । अद्यतावत् पितुः समान० सोदकुम्भान्नदानसहितमेतत्ते तिलोदकमेतत्ते उदकतर्पणम् ॥ सव्येन । ततो गोग्रासादि । क्षेत्रेशबलिः । अपसव्येन । पिण्डेषु पुष्पाणि ॥ आयुः प्रजां ॥ अथ सपिण्डीयान्वष्टका ॥ गेहाग्नेर्दक्षिणतः पूर्वोक्तरूपाःषट् कर्षूर्विधाय । तासां दक्षिणतो मृल्लोष्टैः षट् खरांश्च कुर्यात् । सव्येन गेहाग्निं परिसमूह्य पर्युक्ष्य ६ अपसव्येन इदं पितृभ्यः शृतमभिघार्य । द्वितीयचरौ

इदं पित्रे भूतमभिघार्य चरुद्वये प्रक्षाल्य तण्डुला-न्पवित्रान्तर्हितानावपति प्रक्षाल्य मूलतो मेक्षणम-वदधाति ॥ अग्नावधिश्रित्य तत्रचाभिघार्य दक्षिण-त उद्वास्य पुनश्चाभिघार्य । सव्येन । गेहाग्नेरग्निमु-द्धृत्य अपसव्येन (खराग्नि) प्रणयेत् (यं यं प्रणयेत्तस्य तस्य "सव्येन । परिसमूह्य पर्युक्ष्य" इति साधनाङ्गं कुर्यात् ॥) सव्येन गेहाग्नेरग्निमुद्धृत्य (द्वितीयं) अपसव्येन प्रणयेत् सव्येन परिसमूह्य पर्युक्ष्य ६ गे-हाग्नेरग्निमुद्धृत्य (तृतीयं) अपसव्येन प्रणयेत् स-व्येन परिसमूह्य पर्युक्ष्य ६ गेहाग्नेरग्निमुद्धृत्य (चतुर्थं) अपसव्येन प्रणयेत् सव्येन परिसमूह्य पर्युक्ष्य ६ गे-हाग्नेरग्निमुद्धृत्य (पञ्चमं) अपसव्येन प्रणयेत् स-व्येन परिसमूह्य पर्युक्ष्य ६ । गेहाग्नेरग्निमुद्धृत्य (ष-ष्ठेतु) गेहाग्निं परिसमूह्य पर्युक्ष्य ६ अपसव्येन प्र-

णयेत् सव्येन परिसमूह्य पर्युक्ष्य ६ ॥ खराग्निषु प्रत्यक्रम्य । अपसव्येन परिसमूह्य पर्युक्ष्य परिषिच्य ६ ॥ पाश्चमदक्षिणाग्रैः स्तरैश्चातुष्कोष्ठैः स्तृणीयात् ॥ द्वितीयस्य परिसमूह्य पर्युक्ष्य परिषिच्य ६ परिस्तीर्य ४ । तृतीयस्य ६ चतुर्थस्य ६ पञ्चमस्य ६ षष्ठस्य परिसमूह्य पर्युक्ष्य परिषिच्य ६ सर्वाः ५४ परिस्तीर्य ४ ॥ अवेक्ष्य कर्षाः कर्षेषुर्दाक्षणाग्रान्दर्भानास्तीर्य तिलजलैरभ्युक्ष्य । प्रथमखराग्निषु त्रिषु पितृचरौः । अग्नौ करवाणि ॐकुरु । "सोमाय पितृमते स्वाहा १ अग्नये कव्यवाहनाय स्वाहा" २ इति आहुतिद्वयं द्वयं जुहुयात् । परेषु त्रिषु प्रेतचरोः अग्नौ करवाणि ओंकुरु 'उं ओं' इति द्वे द्वे आहुतीर्दद्यात । तिलास्तोयं । पितृपाकान्मेक्षणेन चर्वर्धमुद्धृत्य पितृकर्षूषु मूलमध्याग्रदेशेषु प्रत्येकस्य पिण्डानां त्रयं त्रयं दद्यात । एतच्चे पिताम-

ह ये च त्वाऽनु अप उपस्पृश्य १ एतत्ते प्रपितामह ये च त्वानु २ एतत्ते वृद्धप्रपितामह ये च त्वानु अप० ३ । एवं द्वितीयस्य ३ तृतीयस्य ३ पिण्डत्रयं दत्त्वा । प्रेतपात्रार्घ्यमुद्धृत्य तिलास्तं यं अपरासु कर्षूषु प्रत्येकस्यै कैकं पिण्डं दद्यात् एतत्ते तत अप उपस्पृश्य ३ 'वा' एतत्ते मातः अप उपस्पृश्य ३ ॥ प्रथमां स्वस्वान्नेन पूरयेत् २ दधिमधुभ्यामिति द्वितीयां २ घृतमांसेन भृतेन श्रापाकेनेति तृतीयाम् २ । पुंसि सुरां दृतिं तूपनयेत् । ६ स्त्रीविषये मज्जामुपनयेत ६ दुग्धेन क्षीरेण । दुग्धेनाभितः परिषिच्य ६ सक्तवः सर्पिषाऽभ्यक्ताः क्षीरोदकपरिप्लुताः । नातिद्रवा नातिघना मन्थ इत्यभिधीयते ॥ मन्थेनाभितः परिषिच्य ६ येचात्र सन्निहिताः स्युर्दधिमधुघृतादयस्तैरपि परिषिच्य ६ पितृन्ध्यायन् । एतद्धवद्धयः ३

वा भवतीभ्यः ३ तृप्यन्तु भवन्तः वा भवत्यः ३ अत्र पितरो मादयध्वं ३ । प्रेतं ध्यायन् । एतद्भवते 'वा' भवत्यै ३ तृप्यतु भवान् 'वा' भवती ३ अत्र पितः "वा" मातः मादयस्व ३ ॥ तद्विष्णोरिति प्रेतपिण्डेषु प्रत्येकस्य पुष्पद्वयं निधाय प्रत्येकं प्रेतपिण्डं। 'त्रैधं करिष्ये' इत्युक्त्वा 'ओं कुरुष्व' इति विप्रवाक्यं श्रुत्वा वसुभ्यो भागः १ रुद्रभ्यो भागः २ आदित्यभ्यो भागः ३ इति सौवर्णरौप्यताम्रसंयुतैर्दर्भैर्विभज्य स्वं स्वं भागं पितामहादिपिण्डेषु निदध्यात् ॥ ततो मधु चाज्यं जलं चार्घ्यं पुष्पं धूपविलेपनम् । बलिं दद्याच्च विधिवत्पिण्डोऽष्टाङ्गो भवेद्यथा ॥ संसृजतु त्वा—वसुभ्यः स्वधा । एतद्वां पितृपितामहौ ये च वामनु ('वा' मातृपितामह्यौ याश्च वामनु सप्तम एष वां लेपः)। अप उपस्पृश्य ॥ १ संसृजतु त्वा—रुद्रभ्यः एतद्वां पितृप्र-

पितामहौ येच वामनु (षष्ठ एष वां लेपः )अपउप- स्पृश्य ॥ २ संसृजतु त्वा—आदित्येभ्यः स्वधा । एतद्वां पितृवृद्धप्रपितामहौ ये च वामनु (पञ्चम एष वां लेपः ) अपउपस्पृश्य ॥ ३ एवं द्वितीयकर्षौ तृतीयस्यां च पिण्डान् दत्त्वा ॥ पुनः पूर्ववत् । प्रथमामन्नेन पूरयेत् १ । दधिमधुभ्यामिति द्वितीयां २ घृतमांसेन भृतेन श्राकेनेतितृतीयां ३ पुंसि सुरामुपनयेत् ३ स्त्रीषु मज्ञामुपनयेत् ३ दुग्धेनाभितः परिषेकः ३ सक्तवः सर्पिषाभ्यक्ताः० मन्थेनाभितः परिषिच्य ३ ये चात्र सन्निहिताःस्युस्तैरपि परिषिच्य ३ एतद्भवद्भ्यः वा भवतीभ्यः ३ । तृप्यंतु भवन्तः वा भवत्यः ३ अत्र पितरो मादयध्वम् ३ अन्त्ये खरे मेक्षणम् ॥ सव्येन उदङ्ङासीनः प्राणायामः ॥ नमो वः पितरो इत्युपस्थानम् ॥ ततः स्वराग्नीन्विमुच्य ३ नयामि ॥

१ उपस्थापयेत्

अग्न आयूंषि १ अग्निर्ऋषिः २ अग्ने पवस्व ३ (भगवन्पुण्डरीकाक्ष)॥ अग्निं परिसमूह्य पर्युक्ष्य परिषिच्य ६ पुरस्तात् ४ अग्नये स्वाहा । प्रजापतये स्वाहा । सूर्याय स्वाहा । प्रजापतये स्वाहा । विमुच्य नयामि । धर्मं देहि । ओं गायत्र्यै नमः ३ अद्यतावत् महागणपतेः अंग्रः अष्टकादेवतायाः हेरुकादीनां आत्मनो वाङ्० पितामहस्य प्रपितामहस्य वृद्धप्रपितामहस्य पितुः समानसपिण्डीकरणे श्राद्धे तेषां वैकुण्ठपदवीप्राप्त्यर्थमात्मनः पुण्यवृद्ध्यर्थं कलशपूजनं क्षेत्रेशपूजनमच्छिद्रं । एताभ्यो यत्रोदकं नमः ॥ आज्ञा मे दीयतां नाथ ॥ क्षमध्वं ममक्षेत्रेशाः । उभाभ्यां जानुभ्यां ॥ नमो ब्रह्मणे । पात्राणि चालयेच्छ्राद्धे ॥ सव्येनाचम्य ॥ उदकलशमुपनिधाय ॥ मन्त्रार्थाः सफलाः सन्तु ॥

अनन्तशालकल्पाय ॥ अद्यतावत् पितुः समान० तृणासनं तृणपादुकां काष्ठपादिकां अङ्गारिकां दण्डं ददानि ॥ इति सपिण्डीकरणश्राद्धविधिः ॥

## ॥ अथ पितृस्तवम् ॥

ॐ विश्वप्रपञ्चरचनाचतुरं दुरन्तकातान्तभङ्गभिदुरं बलमादिसारम् । सारङ्गकोकिलतमाललसच्छरीरं दामोदरं दुरितदुःखहरं नमामि ॥ रुचिः प्रजापतिः पूर्वं निर्ममो निरहङ्कृतिः । यश्चास्तमितशायी च चचार पृथिवीमिमाम् । निरग्निमनिकेतं तमेकाकिनमनाश्रमम् । विमुक्तसङ्गमं दृष्ट्वा प्राचुः स्वपिरो मुने ॥ पितरऊचुः । गृही समस्तदेवानां पितॄणां च तथार्हणम् । ऋषीणां चातिथीनां च कुर्वल्लोकानुपाश्नुते । स्वाहोच्चारणतो देवान् स्वधोच्चारणतः पितॄन् ।

विभजस्वान्नदानेन नत्वा भूतातिथीनपि । स त्वं दे-
वाद्दणाद्बद्धो बन्धसंस्मरणादपि । अनाशोपि मनुष्य-
र्षिभूतेभ्योपि दिने दिने । अनुत्पाद्य सुतान्देवान-
सन्तर्प्य पितृंस्तथा । भूतादींश्च तथा मौढ्यात्सुगतिं ग-
न्तुमर्हसि । क्लेशमेवैककं पुत्र हत्वा माऽत्र भवेत्तव ।
मृतस्य नरकं तद्वत्क्लेश एवान्यजन्मनि । रुचिरुवाच ।
अविद्या पठ्यते वेदे पापायाऽधोगतिस्तथा । भवत्यतो
मया पूर्वं न कृतो दारसंग्रहः । आत्मनः संयमो यो-
ऽयं क्रियतेऽत्तनियन्त्रणात् । समुस्थिते तत्र भवत्य-
सावपि परिग्रहात् । प्रत्ताल्यतेऽनुदिवसं यदात्मा नि-
ष्परिग्रहैः । ममत्वपङ्कदिग्धोपि दम्भोभिश्च वरं हि
तत् । अनेकभवसम्भूतकर्मपङ्काङ्कितो बुधैः । आ-
त्मा सद्वासनातोयैः प्रक्षाल्यो नियतेन्द्रियैः । पि-
तरऊचुः । वत्स कस्मात्त्वया पुण्यो न कृतो दा-

रसंग्रहः। स्वर्गापवर्गहेतुः स बन्धस्तयोरिसं विना। युक्तं प्रक्षालनं कस्मादात्मनो नियतेन्द्रियैः। किन्तु न न्यायमार्गोयं यत्र त्वं पुत्र वर्तसे। पञ्चयज्ञादानैरशुभान्मुच्यते नाभिसंहितैः। फलैस्तथोपभुक्तैश्च पूर्वकर्मशुभाशुभैः। एवं न बन्धो भवति कुर्वतः कारणात्मकैः। नच बन्धाय तत्कर्म भवत्यनाभिसंहितम्। पूर्वकर्म कृतं भोगैः क्षीयतेऽहर्निशं तथा। सुखदुःखात्मकं वत्स पुण्यापुण्यात्मकं नृणाम्। एवं प्रक्षाल्यते प्राज्ञैरात्मा बन्धाच्च रक्ष्यते। नत्वेवं ह्यविवेकेन पापपङ्केन दह्यते। रुचिरुवाच। अविद्या पठ्यते वेदे कर्ममार्गः पितामहाः। तत्कथं कर्मणो मार्गे भवन्तो योजयन्ति माम्। पितर ऊचुः। अविद्या सत्यमेवैतत्कर्मणो तद्वशं वचः। किन्तु विद्यापरिप्राप्तौ हेतुः कर्म न संशयः। विहिताकरणात्पुं-

भिरसद्भिः क्रियते तु यः। संयमो मुक्तये नासौ प्रत्यायानगतिप्रदः। प्रक्षालयामीति भवान् वत्सात्मानं तु मन्यते। विहिताकरणोद्भूतैः पापैस्त्वं भुवि लिप्यसे। अविद्याप्युपकाराय विषवज्जायते नृणाम्। अनुष्ठिताभ्युपायेन बन्धायान्यायतो हि सा। तस्माद्वत्स कुरुष्व त्वं विधिवद्दारसंग्रहम्। मा जन्म विफलं तेस्तु न संप्राप्यान्यलौकिकम्। रुचिरुवाच। वृद्धोहं साम्प्रतं कोन्यः पितरः सम्प्रदास्यति। भार्यां तथा दरिद्राय दुष्करो दारसङ्ग्रहः। पितर ऊचुः। अस्माकं पतनं वत्स भवतश्चाप्यधोगतिः। नूनं भावि भवित्री च नाभिनन्दसि नो वचः। मार्कण्डेय उवाच। इत्युक्त्वा पितरस्तस्य पश्यतो मुनिसत्तम। बभूवुः महसाऽदृश्या दीपा वातहता इव। स तेन पितृवाक्येन भृशमुद्विग्नमान-

सः । कन्याभिलाषी विप्रर्षिः परिबभ्राम मेदिनीम् ।
कन्यामलभमानोसौ पितृवाक्याग्निदीपितः । चिन्ता-
मवाप महतीमतीवोद्विग्नमानसः । किं करोमि क
गच्छामि कथं मे दारसंग्रहः । क्षिप्रं भवेत्पितृणां यो
ममाप्युदयकारकः । इति चिन्तयतस्तस्य मतिर्जा-
ता महात्मनः । तपसाराधयाम्येव ब्रह्माणं कमलो-
द्भवम् । ततो वर्षशतं दिव्यं तपस्तेपे स वेधसे ।
दिदृक्षुः सुचिरं कालं महर्षिर्नियमस्थितः । ततस्तं
दर्शयामास ब्रह्मलोकात्पितामहः । उवाच च प्रस-
न्नोस्मि प्रोच्यतामभिवाञ्छितम् । ततोसौ प्रणिप-
त्याह ब्रह्माणं जगतः पतिम् । ब्रह्माचाऽह रुचिं विप्रं
श्रुत्वा तस्याभिवाञ्छितम् । प्रजापतिस्त्वं भविता
स्रष्टव्या भवतः प्रजाः । सृष्ट्वा प्रजाः सुतान्विप्र
समुत्पाद्य क्रियास्तथा । कृत्वा कृताधिकारस्त्वं

ततः सिद्धिमवाप्स्यसि । स त्वं यथोक्तं पितृभिः कुरु दारपरिग्रहम् । कामं च समभिध्यायन् क्रियतां पितृपूजनम् । त एव तुष्टाः पितरः प्रदास्यन्ति तवेप्सितम् । पत्नीं सुतांश्च सन्तुष्टाः किं न दद्युः पितामहाः । मार्काण्डेय उवाच । इत्यर्षिवचनं श्रुत्वा ब्रह्मणो व्यक्तजन्मनः । नद्या विविक्ते पुलिने चकार पितृतर्पणम् । तुष्टाव च पितॄन्विप्रः स्तवैरेभिरथादृतः । एकाग्रहृदयो भूत्वा भक्तिनम्रात्मको रुचिः । रुचिरुवाच । नमस्येऽहं पितॄन्भक्त्या ये वसन्त्यधिदेवताः । देवैरपि हि तप्यन्ते श्राद्धेषु च स्वधान्तरे । शुद्धैर्मनोरमैर्भक्त्या भुक्तिमुक्तिमभीप्सुभिः ॥ नमस्येऽहं पितॄन्स्वर्गे सिद्धाः सन्तर्पयन्ति यान् । श्राद्धेषु कव्यैः सकलैरुपहारैरनुत्तमैः ॥ नमस्येऽहं पितॄन्भक्त्या येऽर्च्यन्ते गुह्यके-

दिवि । तन्मयत्वेन वाञ्छद्भिर्वृद्धिमात्यन्तिकीं पराम् । नमस्येऽहं पितृञ्छ्राद्धेषु श्रद्धयाभीष्टलोकत्रयप्रदायिनः । नमस्येऽहं पितृन्मर्त्यैरर्च्यन्ते भुवि ये सदा । धान्यैः शुद्धैर्व्रताहारैस्तपोनिर्धूतकल्मषैः । वाञ्छिताभीष्टलाभाय प्राजापत्यप्रदायिनः । नमस्येऽहं पितृन्विप्रैरर्च्यन्ते भुवि ये सदा । पुण्यैः श्राद्धैस्तथाहारैस्तपोनिधूतकल्मषैः । नमस्येऽहं पितृन्विप्रैर्नैष्ठिकव्रतधारिभिः । ये संयतात्मभिर्नित्यं सन्तर्प्यन्ते शमादिभिः । नमस्येऽहं पितृञ्छ्राद्धे राजन्यास्तर्पयन्ति यान् । कव्यैरशेषैर्विधिवल्लोकत्रयफलप्रदान् । नमस्येऽहं पितृन्वैश्यैरर्च्यन्ते भुवि ये सदा । स्वकर्माभिरतैर्नित्यं पुष्पधूपान्नवारिभिः । नमस्येऽहं पितृञ्छ्राद्धे पाताले ये महासुराः । सन्तर्प्यन्ते स्वधाहारैस्त्यक्तदम्भमदैः सदा । नमस्येऽहं पितृञ्छ्राद्धे ह्यर्च्यन्ते ये रसातले ।

भोगैरशेषैर्विविधैर्नागैः कामानभीप्सुभिः। नमस्येऽहं पितॄञ्छ्राद्धे सर्पैः सन्तर्प्यते सदा। तत्रैव विधिवन्मन्त्रैर्भोगसम्पत्समन्वितैः। स्वाहाकारैश्च देवानां स्वधाकारैः पितॄन्यजेत्॥ ॥ पितॄन्नमस्ये निवसन्ति साक्षाद्ये देवलोके च महीतले वा। तथान्तरिक्षे च सुरादिपूज्यास्ते संप्रयच्छन्तु मयोपनीतम्॥ पितॄन्नमस्ये परमाणुभूतान्ये वै विमाने निवसन्ति संघाः। यजन्ति यानस्तमलैर्मनोभिर्योगेश्वराः क्लेशविमुक्तिहेतून्॥ पितॄन्नमस्ये दिवि ये च मूर्ताः स्वधाभुजः काम्यफलाभिसन्धौ। प्रदानसक्ताः सकलेप्सितानां विमुक्तिदा ये त्वभिसन्धितेषु॥ तृप्यन्तु तेऽस्मत्पितरः प्रसन्ना इच्छागता नः प्रदिशन्तु कामान्। सुरत्वमिन्द्रत्वमतोधिकं वा वस्त्वात्मजं क्षेत्रबलं गृहाणि॥ सूर्यस्य ये रश्मिषु चन्द्रबिम्बे

शुक्ले विमाने च सदा चरन्ति । तृप्यन्तु तेऽस्मत्पितरोऽन्नतोयैर्गन्धादिना पुष्टिमितो व्रजन्ति ॥ येषां हुतेऽग्नौ हविषाभितृप्तिर्यैर्भुज्यते विप्रशरीरसंस्थैः । ये पिण्डदानेन मुदं प्रयान्ति तृप्यन्तु तेऽस्मत्पितरोऽन्नतोयैः ॥ ये खड्गमांसेन सुरैरभीष्टैः कृष्णास्तिलैर्दैत्यमहोरगैश्च । कालेन शाकेन महर्षिवर्यैः संप्रीणितास्ते मुदमत्र यान्तु ॥ कव्यान्यशेषाणि च यान्यभीष्टान्यतीव तेषाममरार्चितानाम् । तेषां च सान्निध्यमिहास्तु पुष्पगन्धाम्बुभोज्येषु मयाऽहृतेषु ॥ दिने दिने ये परिगृह्णतेऽर्चां मासान्तपूज्या भुवि येऽष्टकासु । ये वत्सरान्तेऽभ्युदये च पूज्याः प्रयान्तु तेऽस्मत्पितरोऽत्र तुष्टिम् ॥ पूज्या द्विजानां कुमुदेन्दुभासो ये क्षत्रियाणां च नवार्कवर्णाः । तथा विशां ये कनकावदाता नीलानिभाः शूद्रजनस्य

ये च ॥ ते मे समस्ता मम गन्धपुष्पधूपान्नतोयादिनिवेदनेन । तथाग्निहोमेन च यान्तु तृप्तिं सदा पितृभ्यः प्रणतोऽस्मि तेभ्यः ॥ ये देवपूर्वाणि च तृप्तिहेतोरश्नन्ति कव्यान्यशुभाहृतानि । तृप्ताश्च ये भूतिसृजो भवन्ति तृप्यन्तु तेऽस्मिन्प्रणतोऽस्मि तेभ्यः ॥ रक्षांसि भूतान्यसुरांस्तथोग्रान्विनाशयन्त्वऽस्तु शिवं प्रजानाम् । आद्याः सुराणाममरेशपूज्यास्तृप्यन्तु तेऽत्र प्रणतोऽस्मि तेभ्यः ॥ ॥ अग्निष्वात्ता बर्हिषदः सोमपा आज्यपास्तथा । व्रजन्तु वृद्धिं श्राद्धेऽस्मिन्पितरस्तर्पितास्तथा । अग्निष्वात्ताश्च लोकानां मरीच्या लोकविश्रुताः । सोमपाश्चापि विप्राणां क्षत्रियाणां हविर्भुजः । वैश्यानामाज्यपाश्चैव शूद्राणां च स्वकालिनः । अग्निष्वात्ताः पितृगणाः प्राचीं रक्षन्तु ते दिशम् ॥

तथा बर्हिषदः पान्तु याम्यां ये पितरः श्रिताः ।
प्रतीचीमाज्यपास्तद्वदुदीचीमपि सोमपाः । रक्षोभूत-
पिशाचेभ्यस्तथैवासुरदोषतः । सर्वतश्चाधिपस्तेषां यमो
रक्षां करोतु मे ॥ विश्वो विश्वभुगाराध्यो धन्यो
धर्मः शुभासनः । भूतिदो भूतिकृद्भूतिः पितॄणां
ये गणा नव । कल्याणः कल्यदः कर्तृकाल्यः क-
ल्यनिराश्रयः । कल्यताहेतुरनघः षडित्येता गणाः
स्मृताः । वरो वरेण्यो वरदस्तुष्टिदः पुष्टिदस्तथा ।
विश्वपाच्च तथा दाता सप्त चैते गणाः स्मृताः ॥ म-
हान्महात्मा महितो महिमांश्च महाबलः । गणाः
पञ्च तथैवैते पितॄणां पापनाशनाः । सुखदो धन-
दश्चान्यो धर्मदोऽन्यश्च भूतिदः । पितॄणां कथिता-
श्चैवं तथा गणचतुष्टयम् । एकत्रिंशत्पितृगणा यैर्व्या-
प्तमखिलं जगत् । ते मेऽत्र तृप्तास्तृप्यन्तु प्रयच्छन्तु

शुभां मतिम्॥ मार्कण्डेय उवाच॥ एवं तु स्तवतस्तस्य तेजसो राशिरुच्छ्रितः। प्रादुर्बभूव सहसा गगनव्याप्तिकारकः। तद्दृष्ट्वा सुमहत्तेजः समासाद्य स्थितं जगत। जानुभ्यामवनिं गत्वा रुचिःस्तोत्रमिमं जगौ। अर्चितानाममूर्तीनां पितॄणां दीप्ततेजसाम्। नमस्यामि सदा तेषां ध्यानिनां ज्ञानचक्षुषाम्। इन्द्रादीनां च नेतारो दक्षमारीचयस्तथा। सप्तर्षीणां तथान्येषां तान्नमस्यामि कामदान्। मन्वादीनां च नेतारः सूर्यचन्द्रमसांस्तथा। तान्नमस्याम्यहं सर्वान् पितॄनप्सु च गोष्वपि। नक्षत्राणां ग्रहाणां च वाय्वऽग्निनभसां तथा। द्यावापृथिव्योश्च तथा नमस्यामि कृताञ्जलिः। प्रजासृजे कश्यपाय सोमाय वरुणाय च। योगेश्वरेभ्यश्च तथा नमस्यामि कृताञ्जलिः। नमो गणेभ्यः सप्तभ्यस्तथा

लोकेषु सप्तसु । स्वयम्भुवे नमस्यामि ब्रह्मणे योग-
चक्षुष । सोमधाराः पितृगणा ये च मूर्तिधरा हि
ते । नमस्यामि तथा सोमं पितरं च पितामहम् । अ-
ग्निरूपांस्तथैवान्यान्नमस्यामि पितॄनहम् । अग्नीषो-
ममयं विश्वं यत एतदशेषतः । ये ते तेजसि ये
चैव सोमसूर्याग्निमूर्तयः । जगत्स्वरूपिणश्चैव तथा
ब्रह्मस्वरूपिणः । तेभ्योऽखिलेभ्यो योगिभ्यः पितृ-
भ्यस्तु स्वधा नमः । नमो नमो नमस्तेभ्यः प्रसी-
दन्तु स्वधाभुजः ॥ मार्कण्डेयः ॥ एवं तु स्त-
वतस्तस्य तेजसो मुनिसत्तम । निश्चक्रमुस्ते पितरो
भासयन्तो दिशो दश । निवेदितं च यत्तेन ग-
न्धपुष्पानुलेपनम् । तद्भूषितानथ स तान्ददृशे पु-
रतः स्थितान् । प्रणिपत्य पुनर्भक्त्या पुनरत्र कृता-
ञ्जलिः । नमस्तुभ्यं नमस्तुभ्यमित्याह पृथगादृतः ।

ततः प्रसन्नाः पितरस्तमूचुर्मुनिसत्तम । वरं वृणीष्वेति स तानुवाचानतकन्धरः । साम्प्रतं कर्मकर्तृत्वमादिष्टं ब्रह्मणा मम । सोहं पत्नीमभीप्स्यामि धन्यां देवीं प्रभावतीम् ॥ पितर ऊचुः ॥ अद्यैव सद्यः पत्नी ते भवत्विति मनोहरा । तस्यां च पुत्रो भविता भवतो मनुरुत्तमः । मन्वन्तराधिपो धीमांस्त्वन्नाम्नैवोपलक्षितः । रुचे रौच्य इति ख्यातिं प्रयास्यति जगत्त्रये । तस्यापि बहवः पुत्रा महाबलपराक्रमाः । भविष्यन्ति महात्मानः पृथिवीपरिपालकाः । त्वं च प्रजापतिर्भूत्वा प्रजाः सृष्ट्वा चतुर्विधाः । क्षीणाधिकारो धर्मज्ञस्ततः सिद्धिमवाप्स्यसि । स्तोत्रेणानेन च नरो यः सन्तोषति भक्तितः । तस्य तुष्टा वयं सर्वे दास्यामो ज्ञानमुत्तमम् । शरीरारोग्यमैश्वर्यं पुत्रपौत्रादिकांस्तथा । वा-

ञ्छद्भिः सततं स्तव्याः स्तोत्रेणानेन भक्तितः । श्राद्धे
चय इमं भक्त्या त्वस्मत्प्रीतिकरं स्तवम् । पठिष्य-
ति द्विजाग्र्याणां भुञ्जानानां पुरःस्थितः । स्तोत्र-
श्रवणसंप्रीत्या सन्निधाने पुरस्कृते । अस्माभिरत्त-
यं श्राद्धं तद्भविष्यत्यसंशयम् । यद्यप्यऽश्रोत्रियं
श्राद्धं यद्युपहतं भवेत् । अन्यायोपार्जितवित्तेन यदि
वा कृतमन्यथा । अश्राद्धार्हैरुपनतैरुपहारैस्तथाकृतम् ।
अकालेप्यथवाऽदेशे विधिहीनमथापि वा । अश्रद्ध-
या वा पुरुषैर्दम्भमाश्रित्य वा कृतम् । अस्माकं
तृप्तये श्राद्धं तथाप्येतदुदीरणात् । यत्रैतत्पठ्यते श्राद्धे
स्तोत्रमेतत्सुखावहम् । अस्माकं जायते तृप्तिस्तत्र
द्वादशवार्षिकी । हेमन्ते द्वादशाब्दानि तृप्तिमेतत्प्र-
यच्छति । शिशिरे द्विगुणाब्दानि तृप्तिः श्राद्धे कृते
त्त्वियम् । वसन्ते षोडशसमास्तृप्तये श्राद्धकर्मणि ।

ग्रीष्मे च षोडशैवैतत्पठितं तृप्तिकारकम् । विकलेऽपि कृते श्राद्धे स्तोत्रेणानेन साधिते । वर्षासु तृप्तिरस्माकमक्षया जायते रुचे । शरत्कालेऽपि पठितं श्राद्धकाले प्रयच्छति । अस्माकमेतत्पुरुषैस्तृप्तिं पञ्चदशाब्धिकीम् । यस्मिन्गृहे च लिखितमेतत्तिष्ठति नित्यदा । सन्निधानं कृते श्राद्धे तत्रास्माकं भविष्यति । तस्मादेतत्त्वया श्राद्धे विप्राणां भुञ्जतां पुरः । श्रावणीयं महाभाग ह्यस्माकं पुष्टिहेतुकम् । मार्कण्डेयः । ततस्तस्मान्नदीमध्यात्समुत्तस्थौ मनोरमा । प्रश्रयावनता सुभ्रूः प्रम्लोचानाम चाप्सराः । अतीवरूपिणीं कन्यां मत्सुतां भजतां वर । जाता वरुणपुत्रेण पुष्करेण महात्मना । तां गृहाण मया दत्तां भार्यार्थी वरवर्णिनीम् । मनुर्महामतिस्तस्याः समुत्पत्स्याति ते सुतः । तथेति तेन

चाप्युक्ता तस्मात्तोयाद्दपुष्मती । उज्जहारानतां क-
न्यां मालिनीनामनामतः । नद्याश्च पुलिने तस्मि-
न्स मुनिर्मुनिसत्तमः । जग्राह पाणिं विधिवत्समा-
दाय महामुने । तस्यां तस्य सुतो जज्ञे महावीर्यो
महामतिः । रौच्योऽभवत्पितुर्नाम्ना ख्यातोऽत्र वसु-
धातले । तस्य मन्वन्तरे देवास्तथा सप्तर्षयश्च ते ।
तनयाद्भूपाश्चैव ते सम्यक्कथितास्तव । धनवृद्धिस्त-
थाऽरोग्यं धनधान्यसमुद्भवः । नृणां भवत्यऽसन्दि-
ग्धं तथा मन्वन्तरे च सः । पितृस्तवं पठेद्यस्तु
पितॄणां सन्निधौ तथा । सर्वान्कामानवाप्नोति त-
त्प्रसादाच्छुभां मतिम् ॥

इति पितृस्तवम् ॥

## अथ श्राद्धब्राह्मणम् ।

श्रद्धया श्राद्धकामायनी श्राद्धमानुष्टुभन्तु ॥ श्रद्धयाग्निः समिध्यते श्रद्धया हूयते हविः । श्रद्धां भगस्य मूर्धनि वचसा वेदयामसि ॥ प्रियं श्रद्धे ददतः प्रियं श्रद्धे दिदासतः । प्रियं भोजेषु यज्वस्व स्विदते मुदितं कृधि ॥ यथा देवा असुरेषु श्रद्धामुग्रेषु चक्रिरे । एवं भोजेषु यज्वसु, अस्माकं मुदितं कृधि ॥ श्रद्धां देवा यजमाना वायुगोपा उपासते । श्रद्धां हृदय्ययाऽऽकूत्या श्रद्धया विन्दते वसु ॥ श्रद्धां प्रातर्हवामहे श्रद्धां मध्यन्दिनं परि । श्रद्धां सूर्यस्य निम्रुचि श्रद्धे श्रद्धापयेह नः ॥ यजुः ॥ पितुनून्नस्तुनिर्गायत्रंत्वाद्योष्णिगनुष्टुब्गर्भा तृतीयापञ्चम्याद्याश्चतुस्रोऽनुष्टुबोन्त्या बृहती

च ॥ ॥ पितुर्नु स्तोषं महो धर्मानन्तविषीं यस्य त्रितो व्योजसा वृत्रं विपर्वमर्दयत् । स्वादो पितो मधोपितो वयन्त्वा ववृधीमहे अस्माकमविता भव ॥ उप नः पितवाचरः शिवः शिवेभिरूतिभिः । मयोभूरद्विषेण्यः सखा सुशेवो अद्वयः ॥ तव ते पितरो रसा रजांस्यनु विष्ठिता दिवि वाता इव श्रिताः ॥ तव त्ये पितो ददतस्तव स्वादिष्ठ ते पितो । प्रस्वाद्मानो रसानां तुविग्रीवा इवेरते । त्वे पितो महानां देवानां मनोहितम् । अकारि चारु केतुना तवाहिमावसावधीत् । यददः पितो अजगन्विवस्व पर्वतानाम् । अत्राचिन्नो मधो पितो रं भक्ष्याय गम्याः ॥ यदपामोषधीनाम्परि शंसा रिपामहे, वाता पेपीव यद्भव ॥ करम्भ ओषधी भव पीवो वृक्क उदारथिः । वाता पेपीव यद्भव ॥ यत्ते सोम ग-

वाशिरो यवाशिरो भजामहे, वाता धेयीव यद्भव ॥ तन्त्वा वयं पितो वचोभिर्गावो न हव्या सुषूदिम । देवेभ्यस्त्वा सदमादमस्मभ्यं त्वा सदमादम् ॥ १ ॥ सोमाय पितृमत इति तूष्णीम् ॥ सोमाय पितृमत आज्यं पितृभ्यो बर्हिषद्भ्यः षट्कपालः पुरोळाशः पितृभ्यो अग्निष्वात्तेभ्यो धाना अग्नये कव्यवाहनाय मन्था, एतत्ते तत येचत्वाऽनु, एतत्ते पितामह येचत्वाऽनु, एतत्ते प्रपितामह येचत्वाऽनु, अत्र पितरो मादयध्वम् । स्वसन्दृशन्त्वा वयं मघवन्सन्दिषीमहि प्रनूनं पूर्णबन्धुरः स्तुतो यामि वशामनु यो जान्विन्द्र ते हविः । परेत पितरः सोम्यासो गम्भीरेभिः पथिभिः पूर्विणेभिर्दत्वा यास्मभ्यं द्रविणेहि भद्रं रयिं चनः सर्ववीरं नियच्छतु, अमी मदन्तु पितरः ॥ अयाविष्टा जनयन्करवाणि,

सहि घृणिरुर्वराय गातुः । सम्प्रत्युदैद्धरुणं मध्वो अग्रं, स्वायन्तनूं तनुमैरयन्तु । अक्षन्नमी मदन्त ह्यव प्रिया अधूषत । अस्तोषत स्वभानवो विप्रा न विष्टया मती, यो जान्विन्द्र ते हरी ॥ नमो वः पितरो मन्यवे, नमो वः पितरः शुष्माय, नमो वः पितरो जीवाय, नमो वः पितरो रसाय, नमो वः पितरोऽक्रूराय, नमो वः पितरो बलाय, नमो वः पितरः स्वधा वः, पितरो याऽत्र पितरः स्वधा, यत्र यूयं स्थ सा युष्मासु तया यूयं, यथाभागं मादयध्वं, येह पितर ऊर्क् यत्र वयं स्म, सा अस्मासु तस्यै वयं ज्योक्जीवन्तो भूयास्य ॥ मनोन्वा हुवामहे नाराशंसेन स्तोमेन पितृणां च मन्मभिः । आन एतु मनः पुनः क्रत्वे दक्षाय जीवसे ज्योक्च सूर्यन्दृशे । पुनर्नः पितरो मनो ददातु दैव्यो जनः जीवान्व्रातां सचेमहि । आते अग्न इधी-

महि धीमन्तं देवजनम् । यद्ध्स्याति मनीयते समिदीदयति द्यवि इष स्तोतृभ्य आभर ॥ यदन्तरिक्षं पृथिवीमुत द्यां यत्पितरं मातरं वा जिहिंसिम । अग्निर्नस्तस्मादेनसो गार्हपत्यः प्रमुञ्चतु चकृम यानि दुष्कृता ॥ ओं उशन्तस्त्वा हवामह उशन्तः समिधीमहि । उशन्नुशन्त आवह पितॄन्हविषे अत्तवे ॥ त्वं सोम प्रचिकितो मनीषा त्वं रजिष्ठ मननेष पन्थाम् । तव प्रणीती पितरो न इन्दो देवेषु रत्नमभजन्त धीराः ॥ त्वया हि नः पितरः सोमाः पूर्वे कर्माणि चक्रुः पावमान धीराः । वन्वन्तु वातः परिधीरोपर्णुर्वीरेभिरश्वैर्मघवा भवा नः ॥ त्वं सोम पितृभिः संविदानोऽनुद्यावापृथिवी आततन्त । तस्मै त इन्दो हविषा विधेम वयं स्याम पतयो रयीणाम् ॥ बर्हिषदः पितर ऊत्यर्वागिमा वो हव्या चकृमा जुषध्वम् । त आगता

वसाशन्त मे नाथा नः शंय्योनैरापो ददात न ॥ आहन्पितृन्सुविदत्राँअवित्सि नः पातं च विक्रमणं च विष्णोः । बर्हिषदो ये सुधया सुतस्य भाजन्त पितस्त इहागमिष्ठाः ॥ उपहूताः पितरः सोम्यासो बर्हिष्येषु निधिषु प्रियेषु । त आगमन्तु त इह श्रुवन्त्वधिब्रुवन्तोऽवन्त्वस्मान् ॥ अग्निष्वात्ताः पितर इहागच्छन्तु सदः सदः सदतः सुप्रणीतयः । अत्ता हवींषि प्रयतानि बर्हिष्यथा रयिं सर्ववीरं ददातन ॥ अग्निष्वात्ता ऋतावृधः पितरो मृळतास्व नः । प्रमुञ्चन्तु नो अंहसः ॥ अग्निष्वात्ताऽनृतमती हवामहे नराशंसं, सोमपीथं ये आनशुः । ता आगमन्तु त इह श्रुवन्त्वधिब्रुवन्तो तेऽवन्त्वस्मान् ॥ स पूर्वया निविदा कव्यता योरिमाः प्रजा अजयन्मनूनाम् । विवस्वता चक्षसाद्यामऽपश्च देवा अग्निं धारयन्द्र-

विणोदाः ॥ यो अग्निः कव्यवाहनः पितृन्यक्षदृता वृधा । प्रेदु हव्यानि वोचते देवेभ्यश्च पितृभ्य आ त्वदग्ने काव्या त्वन्मनीषा त्वदुक्था जायन्ते राध्यानि त्वदेति द्रविणम् । वीरपेशा इत्था धिये दाशुषे मर्त्याय, वायुरग्रेगा प्रयाभिर्यासि ॥ सीरा युञ्जन्ति कवयो युगा वितन्वते पृथक् । धीरा इन्द्राय सुम्नया ॥ शुनं हुवे मघवानमिन्द्रामस्मिन्भरोनृमं वाजसातौ । शृण्वन्तमुग्रमूतये समत्सु घ्नन्तं वृत्राणि । सञ्जितं धनानाम् ॥ उद्धुत्यं, चित्रन्देवानाम् । इन्द्रं वयं शुनासीरमस्मिन्यज्ञे हवामहे, इह देवं सुरादसम् ॥ इन्द्रं वयं धनपतिं सूनुमन्वारभामहे । स नः पितेव पुत्रेभ्य ईशानः शर्म गच्छतु ॥

इति श्राद्धब्राह्मणम् ॥

॥ ॐ अथ श्लोकतर्पणम् ॥

गृत्समदस्य गायत्री । विश्वेदेवास आगत शृणुताम इमं हवम् । इदं बर्हिर्निषीदत ॥ ब्रह्मा तृप्यतां, विष्णुः, रुद्रः, प्रजापतिः, छन्दांसि तृप्यन्तां, वेदाः, ऋषयः, आचार्याः, इतराचार्याः, तपोधनाः, संवत्सराः सावयवाः, देवाः, अप्सरसः, देवानुगाः, नागाः, सागराः, पर्वताः, सरितः, मनुष्याः यक्षाः, रक्षांसि, पिशाचाः सुपर्णाः, भूतानि, पशवः, वनस्पतयः, भूतग्रामाश्चतुर्विधाः, असुराः क्रूराः, सर्पाः, जम्बुकाः, खगाः, विद्याधराः, जलाधाराः, निराधाराः, पापधर्मरताः, सर्वेदेवाः, सर्वेग्रहाः, यमस्तृप्यतां, धर्मराजः, मृत्युः, अन्तकः, वैवस्वतः, कालः, सर्वप्राणहरः, औडम्बरः, नीलः, ब्रध्नः, परमेष्ठिः,

वृकोदरः, भीमः, चित्रः, चित्रगुप्तः ॥ ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः । भैरवाश्च चतुष्षष्टिर्मातरो लोकपा गणाः । सप्तसागरपर्यन्तं खेचर्यो मन्त्रनायकाः । नागा नद्यश्च द्वीपाश्च पर्वताश्च महाद्रुमाः । ऋषयो देवताश्चैव दिवाचरनिशाचराः । सिद्धा विद्याधरा यक्षा दैत्यदानवराक्षसाः । अण्डजाः स्वेदजाश्चैव उद्भिजा योनिजास्तथा । मुहूर्ता दिवसाः पक्षा मासाः संवत्सरा युगाः । तृप्तिमेते प्रयान्त्वाशु मया दत्तोदकैः शुभैः । ओंनमो ब्रह्मणे चैव आचार्येभ्यो नमो नमः । ऋषिभ्यश्च समस्तेभ्यो देवेभ्यश्च नमो नमः । देवताभ्यो वायुभ्यश्च मृत्यवे च नमो नमः । विष्णवे च नमस्तुभ्यं नमो वैश्रवणाय च । नमोस्तु चोपजाताय नमो जलाधिराशये । अग्निः प्रजापतिश्चैव विश्वदे-

वाश्च तृप्यंताम् । ओंकारं तर्पयामीति महाव्याहृत-
यस्तथा । गायत्री देवऋषयश्छन्दांसि तृप्यतां तथा।
यज्ञो द्यावापृथिव्यौ च अहोरात्रं च तृप्यताम् ।
अन्तरिक्षं समुद्राश्च नद्यस्तृप्यन्तु सर्वदा । क्षेत्रौ-
षध्यो वनस्पत्यो नागा गावो वनानि च । तृप्य-
न्तां वसवो रुद्रा आदित्याः सिद्धदेवताः । महर्ष-
यः कश्यपाद्याः प्रेता भूतगणास्तथा । साध्या भू-
तानि तृप्यन्तां पिशाचा यक्षराक्षसाः । एवमन्ये च
मुनयः स्वस्ति कुर्वन्तु तर्पिताः । ओंनमो ब्रह्मणे
तुभ्यं कालाय च महात्मने । नमस्तेऽस्तु निमेषाय
तुटये ऋतुरूपिणे । लवाय च नमो नित्यं नम-
स्तेऽस्तु क्षणाय च । नमो नमस्ते काष्ठायै काला-
य च नमो नमः । नाडिकायै सुसूक्ष्मायै मुहूर्ता-
य नमो नमः । नमो निशाभ्यः पुण्येभ्यो दिव-

सेभ्यो नमो नमः। नमः पक्षाभ्यां मासेभ्य ऋतुभ्यः षड्भ्य एव च। अयनाभ्यां त्रिभुवद्भ्यां वत्सरेभ्यो नमो नमः। नमः कृतयुगादिभ्यो ग्रहेभ्यश्च नमो नमः। अष्टाविंशतिसंख्येभ्यो नक्षत्रेभ्यो नमो नमः। राशिभ्यः करणेभ्यश्च व्यतीपातेभ्य एव च। प्रतिवर्षाधिपेभ्यश्च विज्ञानाय नमो नमः। नमोस्तु कुलनागेभ्यः सानुरागेभ्य एव च। नमश्चतुर्दशेभ्यश्च मन्वन्तरेभ्य एव च। नमः पुरन्दरेभ्यश्च तत्सङ्घेभ्यो नमो नमः। पञ्चाशद्भ्यो नमो नित्यं दक्षकन्याभ्य एव च। नमो देव्यै सुप्रभायै जयाय विजयाय च। कृशाश्वाय कश्यपाय नमस्ते जनकाय च। नमोस्तु बहुपुत्राय पत्नीभिः सहिताय च। नमो बुद्ध्यै नमो ऋद्ध्यै निद्रायै धनदाय च। नडकूवरयक्षाय गुह्यकस्वामिने नमः।

नमोस्तु शङ्खपद्माभ्यां निधिभ्यामथ नित्यशः । भद्रकाल्यै नमस्तुभ्यं सप्तद्वीपेभ्य एवच । सप्तभ्यश्च समुद्रेभ्यः पर्वतेभ्यो नमो नमः । उत्तरेभ्यः कुरुभ्यश्च नमो हिरण्यबाहवे ॥ भद्राश्वकेतुमालाभ्यां नमः सर्वत्र सर्वदा । नम इलावृतायैव हरिवर्षाय वै नमः ॥ नमः किंपुरुषेभ्यश्च भारताय नमो नमः । नमो भारतभेदेभ्य आर्यावर्तेभ्य एवच ॥ पातालेभ्यश्च सप्तभ्यो नरकेभ्यो नमो नमः । कालाग्निरुद्रशेषाभ्यां हरये क्रोधरूपिणे ॥ नमः सप्तभ्यो लोकेभ्यो महाभूतेभ्य एवच । नमस्ते बुद्धये चैव नमः प्रकृतये तथा ॥ पुरुषायाभिमानाय नमस्तेऽव्यक्तमूर्त्तये । हिमवत्प्रमुखेभ्यश्च पर्वतेभ्यो नमो नमः ॥ नमो पुराणेभ्यश्च गङ्गाभ्यः सप्तभ्यश्च नमो नमः । नमोस्तु पुष्करादिभ्यस्तीर्थेभ्यश्च नमो नमः । निम्नगा-

भ्यो नमो नित्यं वितस्तायै नमो नमः ॥ चतुर्दशेभ्यो देवेभ्यो दानवेभ्यो नमो नमः । नमस्त्वथोच्चैःश्रवसे ध्रुवाय च नमो नमः ॥ नमोस्तु धान्वन्तरये शास्त्रार्थेभ्यो नमो नमः । विनायककुमाराभ्यां विघ्नेशाय नमो नमः ॥ सशाखाय विशाखाय नैगमाय नमो नमः । नमः स्कन्दग्रहेभ्यश्च स्कन्दमातृभ्य एवच ॥ ज्वराय रोगपतये भस्मप्रहरणाय च । ऋषिभ्यो बालखिलेभ्यः कश्यपाय नमो नमः । अगस्त्याय नारदाय व्यासादिभ्यो नमो नमः ॥ अप्सरोभ्यः सोमपेभ्यो देवेभ्यश्च नमो नमः । त्रयस्त्रिंशत्सोमपेभ्यस्तुषितेभ्यो नमो नमः ॥ आदित्येभ्यो नमो नित्यं द्वादशेभ्यो नमो नमः । एकादशेभ्यो रुद्रेभ्यः सगणेभ्यो नमो नमः ॥ दशभ्यो विश्वेदेवेभ्यः पुण्येभ्योथ नमो

नमः । नमो वसुभ्यस्तुष्टेभ्यो दिव्ययोगिभ्य एवच ॥
द्वादशेभ्यो भृगुभ्यश्च नमः सर्वत्र सर्वदा । दश-
भ्योऽङ्गिरसेभ्यश्च तपस्विभ्यो नमो नमः ॥ नमो
नासत्यदस्राभ्यमश्विभ्यां च नमो नमः । साध्येभ्यो
द्वादशेभ्यश्च पुराणेभ्यो नमो नमः ॥ एकोनप-
ञ्चाशद्भ्यश्च मरुद्भ्यश्च नमो नमः । शिल्पाचार्याय
देवाय नमस्ते विश्वकर्मणे ॥ अष्टभ्यो लोकपालेभ्यः
सायुधेभ्यो नमो नमः । आयुधेभ्यो वाहनेभ्यश्छ-
त्रेभ्यश्च नमो नमः ॥ आसनेभ्यो दुर्मुखेभ्यो देवे-
भ्यश्च नमो नमः । दैत्यराक्षसगन्धर्वपिशाचेभ्यो नमो
नमः ॥ पितृभ्यः सप्तभेदेभ्यः प्रेतेभ्यश्च नमो नमः ।
सुसूक्ष्मेभ्यश्च भूतेभ्यो भावगम्येभ्य एवच ॥ नमस्ते
बहुरूपाय विष्णवे परमात्मने । अथ बहूनि नामा-
नि वक्ष्यामि तु पृथक्पृथक् ॥ प्राङ्मुखोदङ्मुख-

श्चैव तर्पयेच्च यथाक्रमम् । अर्घैः पुष्पैस्तथा दर्भैः क्षीरेण मधुमिश्रितैः ॥ देवानृषींस्तथा पितॄन्मन्त्रेणानेन तर्पयेत् । अन्यैश्च विविधैर्दानैस्तृप्तिमाप्नोति शाश्वतीम् ॥ तथाष्टादश नामानि पुराणानां च ये-स्थिताः । तर्पयामि च तान्सर्वानिदमस्तु तिलोदकम् ॥ ब्राह्मं पद्मं वैष्णवं च शिवं भागवतं तथा । तथान्यं नारदीयं च मार्कण्डेयं च सप्तमम् ॥ आदित्यमष्टमं चैव भविष्यन्नवमं तथा । दशमं ब्रह्मवैवर्तं वायुमेकादशं तथा ॥ वाराहं द्वादशं चैव स्कन्दं चैव त्रयोदशम् । चतुर्दशं वामनं च कौर्मं पञ्चदशं स्मृतम् ॥ मात्स्यं च गारुडं चैव ब्रह्माण्डं च ततः परम् । इत्यष्टादश नामानि पुराणानां च ये स्थिताः । तानि संकीर्तयाम्यद्य सततं तर्पयामि च ॥ अथाष्टादश नामानि विद्यास्थानानि

ये स्थिताः । तेषां नामानि श्रेष्ठानि तर्पयामि स्म-
ामि च । अङ्गानि वेदाश्चत्वारो मीमांसा न्याय-
विस्तराः । पुराणं धर्मशास्त्रं च विद्या एताश्चतुर्दश ।
आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति तत्त्रयम् ॥ विद्या-
शास्त्रं चतुर्थं च विद्या ह्यष्टादश स्मृताः । तर्पया-
मि च ताः सर्वा इद० । तथैकविंशति वीरा नर-
काश्चैव ये स्थिताः । तेषां नामानि श्रेष्ठानि तर्पयामि० ।
तामिस्रमन्धतामिस्रं महारौरवरौरवौ । नरकं काल-
सूत्रं च महानरकमेवच । सञ्जीवनं महावीचिं त-
पनं सुप्रतापनम् । सङ्घातकं सकल्लोलं कुड्मलं कु-
दनं तथा । लोहशङ्कुं च भीष्मं च पन्थानं श-
ल्मलिं नदीम् । असिपत्रवनं चैव लोहकण्ठकमेव
च । इत्येकविंशनामानि नरकानां च ये स्थिताः ।
तर्पयामि० । अथ द्वादश सूर्याश्च तेजोमयाश्च ये

स्थिताः । तेषां ना० । मित्रश्च वरुणः पूषा धाता चैवार्यमा भगः । इन्द्रो विवस्वान्दीप्तांशुः सूर्यो मार्तण्ड एव च । विष्णुश्च द्वादशास्तेषामजघन्यजघन्यकौ । तर्पयामि० । अथैकादश ये रुद्रा महाभैरवरूपिणः ॥ तेषां ना० । अजैकपादऽहिर्बुध्न्यः कृत्तिवासाः पिनाकभृत् ॥ वृषाकपिश्च सिन्धुश्च कपर्दी च ततः परम् । बहुरूपो हरश्चैव रुद्रस्त्र्यम्बक एवच ॥ तर्पयामि० ; अथाष्टौ वसवो ये च पूज्याः पितृगणेष्वपि । तेषां० ॥ आपो ध्रुवश्च सोमश्च सावित्रोह्यनलानिलौ । प्रतीपश्च प्रभासश्च वसवोष्टामिमे स्मृताः । तर्पयामि० ॥ अथात्र दश वै भिन्ना विश्वेदेवाश्च ये स्थिताः । तेषां० ॥ क्रतुर्दक्षश्च सत्यश्च वसुश्च कालकामुकौ । ध्वनिश्च रुचकश्चैव पुरूरवार्द्रावाससौ ॥ तर्पया० । अथ चतुर्दश

ये वै मन्वन्तराश्च संस्थिताः ॥ तेषां । चाक्षुषो रुद्र-
सावर्णौविविस्वान्दक्षरैवतौ ॥ सूर्यश्च तामसश्चैव स्वाय-
म्भुवस्तथैवच । ब्रह्मा स्वारोचिषश्चैव हारीतो मनु-
रेवच ॥ धर्मश्चतुर्दश चेति मन्वन्तरा प्रकीर्तिताः ।
तर्पयामि० ॥ अथातः सप्त ये ख्याताः पाताला
जीवसंश्रिताः । तेषां० ॥ तलं श्रीतालं भूतालं
नितालं नभसस्तलम् । रसातलं सुतालं च पाता-
लानां च सप्तकम् ॥ तर्पयामि० । भूर्लोकोथ भुवो-
लोकः स्वर्लोकश्च ततः परम् ॥ महो जनस्तपः
सत्यं सप्त लोका इमे स्मृताः । तर्पयामि० ॥ गङ्गा-
सिन्धुसरस्वतीवितस्तायमुनास्तथा । गोदावरीम-
धुमत्यौ नर्मदैरावती तथा ॥ तर्पयामि० । केदारं
ब्रह्मतीर्थं च वारानसी च मानसम् ॥ प्रयागं पुष्करं
कौरं रामं कनखलं तथा । तर्पयामि० ॥ जम्बु-

द्वीपः कुमारश्च कुशद्वीपस्तथैवच । क्रौञ्चः सिंहल-
द्वीपश्च शाकलिः पुष्करस्तथा ॥ तर्पयामि० । मेरु-
र्मलयमन्दारौ विन्ध्याचलहिमाचलौ । चित्रकूटश्च
कैलासो मैनाको गन्धमादनः ॥ तर्पयामि० । सो-
मसूर्याग्निधामश्च आप आकश एवच ॥ अन्नं च
विष्णुधामश्च धाम इत्यभिधीयते । तर्पयामि० ॥
तर्पयामि च तान्देवानादित्या वसवश्च ये । मरुतोश्चा-
श्विनौ रुद्राः सुपर्णाः पन्नगा ग्रहाः ॥ असुरा यातु-
धानाश्च पिशाचः किन्नरा गणा । शाकिन्यो यक्ष-
वेताला योगिन्यः पूतनादयः ॥ जम्बकाः सिद्धग-
न्धर्वा नागा विद्याधरा नगाः । दिक्पाला लोकपा-
लाश्च मातरश्च महोदयाः ॥ जगतां शान्तिकर्तारो
ब्रह्माद्याश्च महर्षयः । तर्पयामि० ॥ कण्ठोपवीती ।
एकैकमञ्जलिं देवा द्वौ द्वौ तु सनकादयः । अर्हन्ति

पितरस्त्रींस्त्रींस्त्रयोऽप्येकैकमञ्जलिम् ॥ अग्निर्ऋषिः पावमानः पाञ्चजन्यः पुरोहितः । तमीमहे महागयम् ॥ सनकस्तृप्यतां २, सनन्दनः, सनातनः, सनत्कुमारः, कपिलः, आसुरिः, वोढा, पञ्चशिखः, मरीचिः, अत्रिः, अङ्गिराः, पुलहः, पुलस्त्यः, भृगुः, क्रतुः, प्रचेताः, वसिष्ठः, नारदस्तृप्यतां २ ॥ * मनुगौतमसंवर्तविष्णुच्यवनकश्यपाः । बृहस्पत्युशनःशङ्खशातातपपराशराः ॥ पितामहाङ्गिरोदत्तयमापस्तम्भदेवलाः । बुद्धबौधायनव्यासवसिष्ठजमदग्नयः ॥ सोमनारदहारीतयाज्ञवल्क्यप्रचेतसः । लिखितश्छागलेयात्रिविश्वामित्रमरीचयः ॥ कात्यायनोथ जाबालिपैठीनससुमन्तवः । धर्मशास्त्रप्रणीतारः षट्त्रिंशन्मुनयश्चये ॥ ते सर्वे तृप्तिमायान्तु मया दत्तोदकैः शुभैः * ॐशतर्चिनो मध्यमश्च गृत्समदश्च

तृप्यताम् । विश्वामित्रं तर्पयामि वामदेवश्च तृप्यताम् ॥ भारद्वाजः कश्यपात्रिवसिष्ठजामदग्न्यः । तर्पयामि० ॥ प्रगाथः पावमानश्च क्षुद्रसूक्तश्च तृप्यताम् । महासूक्तऋषिश्चैव तृप्यतां सनको भृगुः ॥ सनातनः सनन्दश्च कपिलो ह्यवभावकः वोढः पञ्चशिखो योगी जाबालिस्तृप्यतां सदा । अत्रिवसिष्ठपुलहाः कश्यपो गौतमस्तथा । च्यवनो व्याघ्रपाद्विष्णुर्देवलो लोमहर्षणः ॥ सनको वै दीर्घतपा पाराशर्यपराशरौ । वाल्मीकिश्चैव वत्सश्च भारद्वाजोथ शौनकः ॥ सनन्दः पिपिलादश्च लौगाक्षिः कण्व एवच । आपस्तम्भः सुमन्तश्च बौधायनबलायनौ ॥ याज्ञवल्क्यो मनुर्दक्षो भृगुशङ्खमरीचयः । ऋषिशृङ्गोथ कुशिको गर्गकौत्ससनातनाः ॥ अगस्त्यः शुनलाङ्गूलः शुनःश्वेपश्वपुच्छकौ । हारीतजमदग्निश्च

गुरवश्च तपोधनाः ॥ तर्पयामि० । रैणादित्यः सत्य-
मुद्रो व्यासोथ भार्गवस्तथा ॥ गौर्गुण्डी गौर्गुली चैव
उपमन्युस्तथा मुनिः । करटो मूषको गार्ग्यो वर्ष-
कर्णादयो दश ॥ एते मे सामगाचार्याः स्वस्ति
कुर्वन्तु तर्पिताः ॥ कुथूमिः शालिहोत्रश्च जैमिनिश्च
मुनीश्वरः ॥ एते० । शाटिबालो विशालश्च ताड्यो-
रश्च वृषाणकः । एते० ॥ रुरुकः सोमराहुश्च अग-
स्त्यो मनुरेवच । एते० ॥ वल्कशिरोथ गोबिलो
गौतमः कण्वकस्तथा । एते० ॥ अग्निहोत्रश्च शा-
लिश्च जैमिनिश्च महाशयः । एते० ॥ लौगाक्षिः
कपिलः काण्वस्तथा भागुरिर्देवलौ । एते० ॥
शुनःशिश्चश्वलाङ्गूलौ शुनःपुच्छोथ शौनकः । एते०॥
शाण्डलिश्चैव शाकल्यः शुकःश्रोत्रस्तथैवच । एते०॥
अपसव्येन । उशन्तस्त्वा हवामह उशन्तः समि-

धीमहि । उशन्तुशन्त आवह पितॄन्हविषे अत्तवे ॥ कव्यवाडऽनलः स्वधानमस्तृप्यतां ३ सोमः, यमः, अर्यमा, अग्निष्वात्ताः स्वधानमस्तृप्यन्ताम्, बर्हिषदः, हविष्मन्तः, सुकालिनः, सोमपाः, आज्यपाः, वसवः, रुद्राः, आदित्याः, स्वधानमस्तृप्यन्तां ३ ॥ सुमन्तुर्जैमिनिश्चैव वैशम्पायन एवच । पैलसूक्तस्तथा भाष्यस्तृप्यतां भारतस्तथा ॥ महाभारतधर्मश्च गालवो गोबिलस्तथा । शाकल्यो गार्ग्यशाण्डल्यौ शुकः श्रोत्रश्च भार्गवः ॥ कौकिलः कौशिकश्चैव ब्राभ्रव्यो मण्डूकः स्वधा । गार्गीयो जाह्नवीयश्च तृप्यतां प्रतिथीयकः ॥ सुलभा स्वधा मैत्री च तृप्यतामेतदम्बुना । कोहोत्रं तर्पयामीति कौशीतं पाठ्यमेव च ॥ तर्पयामि महायज्ञं स्वयज्ञं तर्पयामि च । सांख्यायनं तर्पयामि तर्पयाम्यश्वलायनम् ॥ महाश्व-

लायनं स्वधा तर्पयाम्यौदवाहिनीम् ॥ महौदवाहिनीं स्वधा शंशिनं तर्पयामि च ॥ महाशैशनकं चैव तर्पयाम्येतदम्बुना । शङ्खस्य त्रिष्टुप् पितरः । उदीरतामवर उत्परासः उन्मध्यमाः पितरः सौम्या-सः । असुं य ईयुरवृका ऋतज्ञास्ते नोऽवन्तु पित-रो हवेषु । यमस्य त्रिष्टुप् अङ्गिरसः । अङ्गि-रसो नः पितरो नवग्वा अथर्वाणो भृगवः सौम्या-सः । तेषां वयं सुमतौ यज्ञियानामपि भद्रे सुमन-स्ये स्याम । आयन्तु नः पितरः सौम्यासः अ-ग्निष्वाताः पथिभिर्देवयानैः । अस्मिन्यज्ञे स्वधया मदन्त्वधि ब्रुवन्तु तेऽवन्त्वस्मान् ॥ देवताभ्यः पि-तृभ्यश्च महायोगिभ्य एवच । नमः स्वधा च स्वाहाच नित्यमेव भवंत्विह ॥ अद्य तावत् पिता-ऽमुकोमुकगोत्रः स्वधानमस्तृप्यतां ३ ऊर्जं वहन्ती

अमृतं घृतं मधु पयः कीलालं परिस्रुतं स्वधास्थ पितॄन्मे तर्पयत । पितृभ्यः स्वदायिभ्यः स्वधानमस्तृप्यतां ३ पितामहेभ्यः० प्रपितामहेभ्यः स्वदायिभ्यः ॥ ये चेह पितरो येच नेह यांश्च विद्म या उ च न प्रविद्म । त्वं वेत्थ यतते जातवेदाः स्वधाभिर्यज्ञं सुकृतं ज्वषस्व । पितामहः० । मधु वात ऋतायते मधु क्षिरन्ति सिन्धवः । मध्वीर्नः सन्त्वौषधीः ॥ १ ॥ मधु नक्तमथोषसा मधुमत्पार्थिवं रजः । मधुद्यौरस्तु नः पिता ॥ २ ॥ मधुमान्नो वनस्पतिर्मधुमानस्तु सूर्यः । माध्वीर्गावो भवन्तु नः ॥ ३ ॥ प्रपितामहः० । नमो वः पितरो मन्यवे, नमो वः पितरः शुष्माय, नमो वः पितरो जीवाय, नमो वः पितरो रसाय, नमो वः पितरः क्रूराय, नमो वः पितरो बलाय नमो वः पितरः स्वधा वः पितरो

यात्र पितरः स्वधा यत्र यूयं स्थ सायुष्मासु सुधया यूयं, यथाभागं मादयध्वं, येह पितर ऊर्ग्यत्र वयं स्म साऽस्मासु तस्यै वयं ज्योग्ज्योवन्तो भूयास्म ॥ माता, पितामही, प्रपितामही, मातामहः, प्रमातामहः, वृद्धप्रमातामहः । मातामही, प्रमातामही, वृद्धप्रमातामही ॥ (ऐसे सब सम्बन्धियोंकी तृप्ति करके) मातृपक्षास्तु ये केचिद्ये चान्ये पितृपक्षजाः । गुरुश्वशुरबन्धूनां ये कुलेषु समुद्भवाः । ये प्रेतभावमापन्ना ये चान्ये श्राद्धवर्जिताः । जलदानेन ते सर्वे लभन्तां तृप्तिमुत्तमाम् ॥ समस्तमातापितृभ्यो द्वादशदैवतेभ्यः पितृभ्यः हिमपानं स्वधा, क्षीरपानं स्वधा, मधुपानं स्वधा, तिलोदकं स्वधा, उदकतर्पणं स्वधा, हिमं हिमं रजतं रजतं । सव्येन । वसन्ताय नमः, ग्रीष्माय नमः, वर्षाभ्यो नमः, शरदे नमः, हेमन्ताय

नमः, शिशिराय नमः, षड्तुभ्यो नमः देवासुरास्तथा यक्षा नागा गन्धर्वकिन्नराः । पिशाचा गुह्यकाः सिद्धाः कूष्माण्डास्तरवः खगाः ॥ तर्पयामि० ॥ कण्ठोपवीती । जलेचरा भूनिलया वाय्वाधाराश्च जन्तवः । तर्पयामि० ॥ अपसव्येन । नरकेषु च सर्वेषु यातनासु च ये स्थिताः । तेषामाप्यायनायैतद्दीयते सलिलं मया ॥ ये बान्धवा अबान्धवा येऽन्यजन्मनि बान्धवाः । तेषां ॥ येऽपिदग्धा अदग्धा वा प्राणमन्तश्च ये स्थिताः । तेषां । ये चरन्ति सदा मेरौ ब्रह्मणाधिष्ठिताः सुराः । तेषां ॥ कैलासवासिनो ये च ये शिवध्यानतत्पराः । तेषां ॥ त्र्यवरा ब्राह्मणा येच गुरवश्च तपोधनाः । तेषां ॥ अगतीकाश्च शिष्याश्च प्रत्यक्षं भूरिभोजनाः । तेषां ॥ नागलोकगता ये च विष्णुध्याने च ये रताः ।

तेषां ॥ अमरा येऽवतिष्ठन्ति विष्णुं क्षीरोदशायिनम् । तेषां ॥ इत्थमेते मुनिवराः समाख्याताः स्वनामभिः । अन्ये नाख्यातनामान ऊर्ध्वरेताः प्रजासृजः । तृप्तिमायान्तु ते सर्वे इदमस्तु तिलोदकम् ॥ पिता पितामहश्चैव तथैव प्रपितामहः । मातामह्यः पराश्चैव प्रमातामह्य एवच । प्रपूर्वा वृद्धपूर्वाश्च पूर्वोत्तरास्तथैवच । तेषां ॥ भ्राता मातामहश्चैव प्रमातामहएव च । वृद्धपूर्वो मातुलश्च गुरुः श्वशुर एव च । तेषां ॥ श्वश्रूः स्वसा गुरुपत्नी भार्या मित्रस्य तृप्यताम् । पितृमातामहश्चैव पितृव्यो भ्रातरस्तथा । पितृस्वसा मातुलश्च तद्भगिन्यश्च मातुलाः । भार्या भगिन्यो दौहित्रा श्वशुरो भावकाः स्नुषाः । स्यालाश्च गुरुराचार्यः स्वामी सखा यथा क्रमम् । तर्पयामि तान्० ॥ आ ब्रह्मणो ये पितृ-

वंशजाता मातुस्तथा वंशभवा मदीयाः । वंशद्वये-स्मिन्मम दासभूता भृत्यास्तथावाश्रितसेवकाश्च । मित्राणि सख्यः पशुवंशभृत्या दृष्टाः श्रुता वापि कृतोपकाराः । जन्मान्तरे ये मम सङ्गताश्च स्वधा खिदमम्बु ददामि तेषाम् ॥ पितृव्या भ्रातृपुत्राश्च मातुलस्य च ये सुताः । मातृस्वसृसुताश्चैव पुत्रा-स्तद्वत्पितृस्वसुः ॥ तर्पयामि० । तनयास्तनयाश्चैव ये चान्ये स्नेहभागिनः । तर्पयामि ॥ ये मत्कुल्याः स्वर्गलोके नरके वा वसन्ति ये । अवीच्यन्तर्गता ये च कुम्भीपाकान्तरे स्थिताः ॥ रौरवस्योपभोक्तारो ये महारौरवे स्थिताः । कालसूत्रोपतप्ताङ्गा असि-पत्रवने स्थिताः । तर्पयामि० ॥ क्षुधूत्पूयासृग्विष्टा-रुक्कटाहाप्लुतविग्रहाः । अन्यत्रवा तत्र तत्र यातना-सु च ये स्थिताः । तर्पयामि० ॥ यमाय धर्मराजाय

मृत्यवे चान्तकाय च । वैवस्वताय कालाय सर्वप्राणह-
राय च । औडम्बराय नीलाय ब्रह्माय परमेष्ठिने । वृको-
दराय भीमाय चित्रगुप्ताय वै नमः । पाशहस्तकृता-
न्ताय प्रेताधिपतये नमः ॥ स्वाहाकारः स्वधाकारः
प्रणवश्चैव सप्तधा । तर्पयामि० ॥ देवाश्च ऋषयश्चैव पि-
तरस्तृप्यंतां स्वधा । यत्र देवाश्च ऋषयो मघवान्सप्त
सप्तश्च ॥ भूताश्च प्रेतरूपाश्च प्रणवादि नमो नमः । तर्प-
यामि० ॥ ये मातृकुलसम्भूताः पितृवंशसमुद्भवाः ।
दुहितुश्च कुले जाता ये भ्रातृस्वसृवंशजाः ॥ राज्ञां चैव
कुले ये च ये तद्वर्गसमुद्भवाः । श्वशुरस्य कुले जाता ये
श्वश्रूकुलसम्भवाः ॥ सुहृत्कुले गुरुकुले बन्धोर्ममकुले
तथा । यस्मिन्स्थाने च पितरो धनसम्बन्धिनश्च
ये ॥ येषां गृहे मया भुक्तं येषां भुञ्जाम्यहं पुनः ।
पुत्रदारविहीनाश्च नरके वा वसन्ति ये ॥ तेभ्यः

सर्वेभ्यः पितृभ्य इदमस्तु तिलोदकम् । अस्मिन्दिने महापुण्यं यन्मया समुपार्जितम् ॥ तेनायं सर्वजन्तूनां क्लेशदोषः प्रशाम्यतु । मत्कुले ये च पितरो लुप्तपिण्डोदकक्रियाः । सूक्ष्मास्त्वकृतचूडाश्च ये च गर्भादिके मृताः ॥ येपिदग्धा अदग्धा वा ये च संस्कारवर्जिताः । तेषा० ॥ यत्र मे मातरः प्रेता यत्र प्रेताः प्रमातरः । महाप्रमातरः प्रेतास्तिलाम्भस्तत्र गच्छतु ॥ यत्र मे पितरः प्रेता यत्र प्रेताः पितामहाः । प्रपितामहान्तराः प्रेतास्तिलाम्भस्तत्र गच्छतु ॥ पञ्चाशत्कोटयो घोरा नरकानां प्रकीर्तिताः । असत्कर्मरतानां च नराणां शास्त्रदूषिणाम् ॥ पितृणां चैव सर्वेषामिदमस्तु तिलोदकम् ॥ देवद्रव्योपहर्तॄणां शरणागतघातिनाम् । आत्मनस्त्यागिनां चैव चण्डालादिहताश्चये । त-

मसा दग्धकर्माणो महापातकिनश्च ये । गोघ्नानां च कृतघ्नानामगम्यगामिनां तथा । सुवर्णभूमिहर्तॄणां शौचाचारविवर्जिनाम् । दयादाक्षिण्यहीनानां पैशुन्यानृतचेतसाम् । नरकास्तु समाख्याताश्चत्वारिंशाधिकं शतम् ॥ तेषामपि प्रधानाश्च नरकास्तु प्रकीर्तिताः । अवीचिः कुम्भपाकश्च महारौरवरौरवाः । असिपत्रवनं चैव तथा वैतरणीनदी । तन्मध्ये पतिता ये च ये च कर्मवशानुगाः । तरन्ति सर्वे तत्क्षिप्रं मद्दत्तेनोदकेन ते । सप्त सप्त तथा सप्त मातृकाः पितृकाश्च ये । गुरुश्वशुरबंशोत्थास्तृप्यन्तामुदकेन ते । पितॄणां चैव सर्वेषामिदमस्तु तिलोदकम् । उन्मत्ताः प्रतिपन्नाश्च गुरुशापव्यतिक्रमात् । तेषामुद्धरणार्थाय नराणां नरकार्णवात् । ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च स-

दाशिवः। पञ्चकारणसंयोगान्नराणामस्तु तोषणम्। गोब्राह्मणहतानां च तथा विश्वासघातिनाम्। अन्येषां पतितानां च इदमस्तु तिलोदकम्॥ सव्येन। विष्णुपीठे भद्रपीठे तीर्थे देवसमागमे। यागार्चनेऽग्निकार्ये च देवगोद्विजसन्निधौ। दद्यान्मन्त्रमयं तोयं पितॄणामात्मतृप्तये। सर्वं प्रतिग्रहे होमे स्नाने दाने सुरार्चने। अध्यापने तथा यज्ञे य इदं तर्पणं पठेत्। धनं कीर्तिर्यशश्चैव नित्यं च सुखमश्नुते। दीर्घायुः सुबहून्पुत्रान्पठमानो लभेत्सदा। वपुः पूतं पवित्रं च नित्यं गौदानिकं फलम्॥ मा विघ्नं मा च मे पापं मा सन्तु परिपन्थिनः। सौम्या भवन्तु तृप्ताश्च भूताः प्रेताः सुखावहा। ओंनमो देवेभ्यः०।

इति श्लोकतर्पणम्॥

## ॥ अथ गोप्रदानम् ॥

आदौ कुशब्राह्मण को संव्वः सृजामि । अश्विनोः प्राण से जीवाधान देकर, नमस्कार करना ॥

प्रसीद मम हे विद्वन्भगवंस्त्वां नुता वयम् । अनुग्रहार्थमस्माकमियं गौः प्रतिगृह्यताम् । आपादाच्छीर्षपर्यन्तमापो हिष्ठेति शाश्वतम् । न वहन्तीति मन्त्रेण गवां स्नानं प्रकल्पयेत् ॥ इन मन्त्रों से गवों को छिडकना । आपोहिष्ठा० । हिरण्यवर्णाः शुचयो या० । यासां देवा दिवि० । यासां राजा वरुणो० । शिवेन मा चक्षु० । न वहन्तीभिः स्नायाद्यद्वहन्तीभिः स्नायात्क्षेत्रं यश ऋच्छेन्न कूप्याभिः स्नायाद्विषं यश ऋच्छेत्स्थावराभिः स्नायादेतां वां अपां दीक्षिता पशुमतीर्याः स्थावरा लोमशाः सन्तता लोमशा पशवो यजमानमेव यशमर्पयन्ति ॥ इति गवांजलाभ्युक्षणम्

ततो ब्राह्मणगवोः पूजनम्। अब ब्रह्मण और गवों को पूजा करना। ॐगायत्र्यै नमः ३। तत्पुरुषाय विद्महे महादेवाय धीमहि। तन्नो रुद्रः प्रचोदयात् ३॥ (जलधेनुविषये) वासुदेवाय विद्महे नारायणाय धीमहि। तन्नो विष्णुः प्रचोदयात् ३॥ सुभगायै विद्महे काममालिन्यै धीमहि। तन्नो धेनुः प्रचोदयात् ३॥ ॐ तत्सद्ब्रह्माद्यतावत्० रुद्रस्य वा (विष्णोः) सानुचरस्य। नन्दायाः, सुनन्दायाः, सुभगायाः, सुशीलायाः, सुरभेः, वरकामधेनोः आत्मनो० श्रीविष्णुप्रीत्यर्थं पितुर्वा मातुः परलोके वैतरिणीनदीसुखसन्तारणार्थं गोप्रदाननिमित्तं रुद्र (विष्णु) पूजनं धेनुपूजनमर्चामहं करिष्ये ॐकुरुष्व। एवमेव। रुद्रस्य वा (विष्णोः) नन्दायाः० इदमासनं नमः। रुद्राय (विष्णवे) सानुचराय नन्दायै सुनन्दायै सुभगायै सुशीलायै सुरभये

वरकामधेनवे युष्मान्वः पूजयामि ॐपूजय । रुद्रं वा (विष्णुं) सानुचरं नन्दां सुनन्दां सुभगां सुशीलां सुरभिं वरकामधेनुं आवाहयिष्यामि ॐआवाहय ॥ आवाहनं । आवाहयाम्यहं देवमीश्वरं पार्वतीपतिम्० । "वा" विष्णुं वै विश्वरूपिणम्० । या देवी भार्गवकुले नन्दा सर्वत्र पूजिता । आगता सा गृहे माता सुप्रीता वरदास्तु मे ॥ या गिरीशं सदा देवी सुनन्दा प्रत्युपस्थिता । आगता० ॥ सुभगा या भारद्वाजे सर्वकामफलाप्तये । आगता० ॥ सुशीला कश्यपे या तु पूजिते सर्वपूजिता । आगता० ॥ आवाहयाम्यहं देवीं सुरभीं लोकमातरम् । पूज्यां त्रिभुवने दैत्यैर्गन्धर्वैः सुरकिन्नरैः ॥ अमृतस्राविणीं देवीं सर्वयज्ञप्रवर्तिनीम् । देवि त्वं सर्वदेवानां जननी सर्वकामदा ॥

मया कामदुघा दत्ता कामदास्तु भवे भवे । देवि त्वं पापहर्तासि देवि त्वं मलनाशिनी ॥ देवि त्वं मानदालोके देवि त्वं भयनाशिनी । यवान्विकीर्य । शन्नो देवी० । लाजाश्च० । रुद्राय 'वा' विष्णवे सानुचराय नन्दायै० पाद्यं नमः । पुनः शन्नो देवी० । आपः क्षीरं० । रुद्र 'वा' विष्णो सानुचर नन्दे० इदं वोऽर्घ्यं नमः । रुद्राय 'वा' विष्णवे सानुचराय नन्दायै समालभनं गन्धो नमः । एवं अर्घो नमः पुष्पं नमः । पादेषु वेदाश्चत्वारः ऋग्वेदाय नमः यजुर्वे० सामवे० अथर्ववे० । कृतयुगाय त्रेता० द्वापर० कलि० । [ललाटे] रुद्राय [नेत्रयोः] सूर्याय सोमाय [श्रवणयोः] अश्विभ्यां [नासिकायां] वायवे [दन्तेषु] ऋषिभ्यो [ओष्ठयोः] धर्माय अधर्माय [जिह्वायां] सरस्वत्यै [हुङ्कारे] प्रजापतये [ग्रीवायां] कालरात्र्यै [शृङ्ग-

यो:] मेरवे मन्दाराय [पार्श्वयोः] दशदिग्भ्यो [तन्मध्ये]
विष्णवे ध्रुवाय असुरेभ्यो गणेभ्यो [उरसि] स्कन्दा-
य सिद्धेभ्यो साध्येभ्यो [रोमकूपेषु] विद्याधरेभ्यो [जठरे]
हुताशनाय [श्रोणितटे] पितृभ्यो [लाङ्गूले] वालखि-
लेभ्यो [स्तनेषु] क्षीरोदधये क्षारो० दध्यु० घृतो०
सुरो० स्वादू० इक्षू० [हृदये] वराहाय [कुक्षौ] वसुभ्यो
[आधारे] अग्नये [पृष्ठे] वैवस्वताय यमाय [दक्षिणकु-
क्षौ] देवेभ्यो [वामकुक्षौ] असुरेभ्यो [अपाने] सर्वतीर्थे-
भ्यो [गोमये] लक्ष्म्यै [प्रस्रावे] जाह्नव्यै नदीभ्यो [खु-
रमध्ये] गन्धर्वेभ्यो [खुराग्रे] पन्नगेभ्यो [खुराणांपश्चि-
मभागे] गणेभ्यो असुरेभ्यो रुद्रमातृभ्यो जानुदेशे
विश्वेभ्योदेवेभ्यो सर्वदुहितृभ्यो सर्वस्वसृभ्यो [कृकाटि-
कायांसटेषु] विद्याधरेभ्यो नन्दायै सुनन्दायै सुभ-
गायै सुशीलायै सुरभ्यै वरकामधेनवे भूर्भुवःस्वः-

स्वरूपायै अर्घो नमः पुष्पं नमः ।। धूपदीपवासोऽपोशा-
नं । पुनः शन्नो देवी० । सैव दक्षिणा ।। विष्णोःप्रति-
मायाः पृच्छां विसर्ज्य । ओंभूःपुरुषं विसर्जयामि नमः ३
सर्वा विष्णुगायत्रीः आत्मनो० पितुर्वा मातुर्विष्णु-
पूजनमच्छिद्रं० । आपन्नोसि० । ध्येयःसदा० । नमो
ब्रह्मणे० । अद्य तावत् पितुर्वा मातुः परलोके सु-
खसन्तारणार्थं रुद्राय (विष्णवे) सानुचराय मणि-
मुक्तप्रवालान्नादिसहितां सहिरण्यां सवासंस सर्वोप-
स्करणोपेतां गां ददानि ३ गवामङ्गेषु तिष्ठन्ति
भुवनानि चतुर्दश । यस्मात्तस्माच्छुभं मेस्यादिहलो-
के परत्र च । गां प्रतिगृह्णामि ३ इति ब्रूयात्प्र-
तिगृहीता । अथाञ्जलिं बद्ध्वा जपेत् ।। क इदं कस्मै
अदात् कामः कामाय कामो दाता कामः प्रतिगृ-
हीता, कामः समुद्रमाविशत् कामेन त्वा प्रतिगृ-

हामि कामैतत्तेऽस्तु इति ॥ तत्पुच्छं तु करे कृत्वा देवान्पितॄंश्च तर्पयेत् । कुशसर्षपमध्वाज्यपयोऽक्षततिलोदकैः ॥ ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः । महाकालाग्निरुद्राश्च व्यक्ताव्यक्तमनोरथाः । ते सर्वे तृप्तिमायान्तु गोपुच्छोदकतर्पणात् ॥ इन्द्राद्या लोकपालाश्च ब्राह्म्याद्या मातरस्तथा । आदित्या वसवो रुद्राः सरितः सागरास्तथा । ते सर्वे० ॥ देवकन्या नागकन्याश्चासुराणां च कन्यकाः । ऋषयो मुनयो गावो देवमातर एव च । ताः सर्वा० ॥ यमो वै धर्मराजश्च मृत्युश्चान्तक एव च । वैवस्वतश्च कालश्च सर्वप्राणहरस्तथा । औडम्बरश्च नीलश्च चित्रगुप्तस्तथैव च । ते सर्वे० ॥ पुष्करो नैमिषारण्यं कुरुक्षेत्रं पृथूदकम् । कार्कोटकं प्रभासं च तथा बधिरिकाश्रमम् । ते सर्वे० ॥ अन्यानि

सर्वतीर्थानि ह्यासमुद्रात्सरांसि च । तानि सर्वाणि तृप्यन्तु गो० ॥ भौमः शनैश्चरश्चैव बुधः शुक्रो बृहस्पतिः । सूर्यसोमौ च राहुश्च ध्रुवागस्त्यसमाहिताः । उपग्रहाश्च ये देवास्तथान्ये लोकपालकाः । ते सर्वे० ॥ शेषः कूर्मस्तथा नागाः किन्नरा पर्वतादयः । विद्याधरा अप्सरसो मुनयश्चोर्ध्वरेतसः । सप्तर्षयः ससमुद्रा वाडवाग्निर्महाबलः । ते सर्वे० ॥ कूर्मकच्छपमत्स्याश्च पुरुषा जलवासिनः । अश्विनौ च कुमारश्च सत्यवन्तो महातपाः । ते सर्वे० ॥ देवासुरास्तथा यक्षा नागा गन्धर्वकिन्नराः । यक्षराक्षसडाकिन्याः पूतनाजम्बुकादयः । ते सर्वे० ॥ ब्रह्मराक्षसवेतालाः कूष्माण्डा क्रूरमार्गगाः । भूम्यन्तरिक्षपाताले ये वसन्ति महोदयाः । ते सर्वे० ॥ ओंकारश्चैव गायत्री सावित्री च सरस्वती । ऋग्वे-

दोथ यजुर्वेदः सामवेदस्तथैव च । अथर्वश्चोपवे-
दाश्च सषडङ्गपदक्रमाः । ते सर्वे० ॥ इन्द्रोपेन्द्रो
महेन्द्रो वा देवेन्द्राश्चापि सामराः । धान्वन्तरा-
धिपा ये च संभूता ये पुरन्दराः । ते सर्वे० ॥
यः प्रभुः सर्वभूतानां येन सर्वं प्रतिष्ठितम् । स
एष भगवान्विष्णुर्बहुरूपो जनार्दनः । ब्रह्मा प्रजा-
पतिश्चैव मित्रो मरुत्तथाश्विनौ । ते सर्वे० ॥ का-
र्तिकेयो महासेनः स्कन्दरूपी षडाननः । नन्दी चैव
महाकालो भृङ्गिरट्च गणेश्वरः । षष्टिकोटिगणाः
सर्वे शिवभक्ताश्च ये स्थिताः । ते सर्वे० ॥ ब्रह्मा-
द्याश्च सुरश्रेष्ठाः पद्मयोनिः पितामहः । नासत्या-
वश्विनौ दस्रावाश्विनीयौ च तावुभौ । ते सर्वे० ॥
गृत्समदस्य गायत्री । विश्वेदेवास० ॥ [पृ० १४३ पं०१]
ॐ अथ यजुर्वेदकाठके लौगाक्षिसूत्रे यज्ञपरि-

शिष्टे तर्पणखण्डं व्याख्यास्यामः ॥ अग्निः प्रजापतिः सोमो रुद्रोदितिर्बृहस्पतिः सर्प इत्येतानि प्राग्द्वाराणि सदैवतानि सनक्षत्राणि सग्रहाणि सहोरात्राणि समुहूर्तानि तर्पयामि वसूंश्च तर्पयामि ॥ पितरोऽर्यमा भगः सविता त्वष्टा वायुरिन्द्राग्नी इत्येतानि दक्षिणद्वाराणि सदैवतानि सनक्षत्राणि सग्रहाणि सहोरात्राणि समुहूर्तानि तर्पयामि रुद्रांश्च तर्पयामि ॥ मित्र इन्द्रो नैऋतिरापो विश्वेदेवा ब्रह्माविष्णुरित्येतानि पश्चिमद्वाराणि सदैवतानि सनक्षत्राणि सग्रहाणि सहोरात्राणि समुहूर्तानि तर्पयामि आदित्यांश्च तर्पयामि ॥ वसवो वरुण अजैकपादहिर्बुध्न्यः पूषाश्विनौ यम इत्येतानि उदग्द्वाराणि सदैवतानि सनक्षत्राणि सग्रहाणि सहोरात्राणि समुहूर्तानि तर्पयामि साध्यांश्च तर्पयामि ॥ ब्रह्माणं तर्पयामि प्रजापतिं चातुर्मुखं स्वायंभुवं परमेष्टिनं हिर-

ण्यगर्भं रुद्रपार्श्वदान् रुद्रपार्षदींश्च ओंभूःपुरुषं ओंभुवः-
पु० ओंस्वःपु० ओंभूर्भुवःस्वःपु० ओंभूर्लोकं० ओंभुवो-
लोकं० ओंस्वर्लो० ओंमहोलोकं० ओंजनोलोकं० ओंत-
पोलोकं० ओंसत्य० भवंदेवं शर्वंदेवं रुद्रंदेवं पशुपतिंदेवं
उग्रंदेवं महादेवं भीमंदेवं ईशानंदेवं। भवस्यदेवस्यपत्नीं
तर्पयामि शर्वस्यदे० रुद्रस्यदे० पशुपतेर्दे० उग्रस्यदे०
महादे० भीमस्यदे० ईशानस्यदे०॥ भवस्यदेवस्यसुतं
तर्पयामि शर्वस्य० रुद्रस्य० पशुपते० उग्रस्य० महादे-
वस्य०भीमस्य० ईशानस्य०॥ सनकंतर्पयामि सनत्कु-
मारं स्कन्दं षष्टं विशाखं स्कन्दपार्षदान् स्कन्द-
पार्षदींश्च विघ्नान् वीरान् कालं एकदन्तं हस्ति-
मुखं विघ्नपार्षदान् विघ्नपाषर्दींश्च यमं धर्मराजं मृत्युं
अन्तकं वैवस्वतं सर्वप्राणहरं औडम्बरं नीलं ब्रध्नं
वृकोदरं भीमं चित्रं चित्रगुप्तं पाशहस्तं कृतान्तं

प्रेताधिपतिं उग्रमुखं भारद्वाजं धान्वन्तरिं धान्वन्तरिपार्षदान् धान्वन्तरिपार्षदींश्च विद्यां माहेश्वरीं वह्निं गेहाग्निं दक्षिणाग्निं आहवनीयाग्निं सूर्यं वरुणं वायुं कुबेरं इन्द्रं जातवेदसं नैर्ऋतिं मारुतं वैश्रवणं ईशानं अग्निं शक्रं रौरवं असिपत्रवनं कुम्भीपाकं विभीषणं अतिभीषणं गर्भवासं स्वात्मगं गुह्यकान् मोहिनीं पयोधरान् आकाशाधारान् वाय्वाधारान् निराधारान् निराश्रयान् भद्राश्वद्वीपं शाकल्य० जम्बु० कुश० क्रौञ्च० शल्मलि० गोमेध० पुष्कलद्वीपं अस्तम्भितं केतुमालिं मोहान्धकारं संयमिनीं सुमेरुं हरिवर्षं हेमकूटं किन्नरं हिमाचलं मलयाचलं अमरावतीं ज्योतिष्मतीं संयमनीं कृष्णां प्रभावतीं शुद्धवतीं गन्धर्ववाहिनीं महोदरीं क्षीरसमुद्रं क्षार० दधि० इक्षु० स्वादूदक० घृत० सुरासमुद्रं गण्डा-

न्तकं रुद्रलोकं ब्रह्म० विष्णु० ध्रुवमण्डलं सप्तर्षि०
भीम० वायु० सूर्य० हाटकेश्वरं धूम्रकेतुं लवणवर्षं
ज्वालाकूटं मन्दारपर्वतं मैनाक० चित्रकूट० गन्ध-
मादन० निषध० विन्ध्य० पर्यन्त० सह्य० वलाह०
कङ्क० कृतयुगं त्रेतायुगं द्वापरयुगं कलियुगं ब्रह्म-
पुराणं पद्म० भागवत० नारद० मार्कण्डेय० अग्नि०
भविष्यत्० ब्रह्माण्ड० लिङ्ग० वाराह० वायु० शिव०
वामन० ब्रह्मवैवर्त० स्कन्द० गरुड० विष्णु० एक-
नामं बहुनामं सोमं कुमारं अङ्गारकं हरिं सौम्यं
शुक्रं गिरांपतिं वैद्युतीं भृगुसुतं सृष्टिकर्तारं सौरं ग-
णपतिं सैंहिकेयं शिवं मयूरं केतुं ध्रुवं अनन्तं वा-
डवाग्निं अग्नीषोमौ हव्यवाहनं कव्यवाहनं चित्रभानुं
ज्वलनं वैश्वानरं हुताशनं बहुरूपं धनञ्जयं प्रत्यक्ष-
देवं पावकं कालाग्निरुद्रं सर्वभूताधिपतिं त्र्यम्बकं

वासुकिनागराजं पुष्कर० तक्षक० चक्रहस्त० ऐला-पत्र० दैत्याख्य यातुधान० शङ्खपाल० फणीश्वर० पद्म० महापद्म० नील० शेष० अनन्त० कुलिक० ब्राह्मीं माहेश्वरीं कौमारीं वैष्णवीं वाराहीं नारसिंहीं ऐन्द्रीं ईशानीं दुर्गां गायत्रीं सावित्रीं सरस्वतीं ग्रहान् लोकपालान् नागान् सागरान् वेतालान् किन्नरान् पिशाचान् सुपर्णान् गुह्यकान् कूष्माण्डान् उच्छुष्मान् जलेचरान् भूचरान् खेचरान् वाग्बाधा-राज्ञन्तून् विश्वकर्माणं वसून् रुद्रान् आदित्यान् साध्यान् वेदान् इतिहासपुराणं ऋग्वेदं यजुर्वेदं सामवेदं अथर्ववेदं अथर्वाङ्गिरसं धर्मशास्त्राणि न-क्षत्राणि नक्षत्राङ्गानि नक्षत्रदेवताः यज्ञान् अधिष्ठा-नदेवताः इष्टियागं सोमयागं इन्द्राग्नी प्रकृतिं वि-कृतिं प्राप्यप्रापकान् ग्राह्यग्राहकान् सोमपान् असो-

मपान् चमसादिदेवता यज्वानं याजकान् विधेर्देवताः आग्रायनदेवताः धूपदेवताः ब्राह्मीं वाचं परां पश्यन्तीं मध्यमां वैखरीं मन्त्रपान् बलियोगिनीः यज्ञपार्षदान् यज्ञपार्षदींश्च धर्मं अर्थं कामं मोक्षं सत्यं दिशः विदिशः योगान् तारकाः संवत्सरान् ऋतून् मासान् अर्धमासान् अहोरात्राणि सप्तलोकान् सप्तपातालान् सप्तद्वीपान् सप्तजिह्वान् सप्तहोतॄन् अष्टौवसून् एकादशरुद्रान् दशाङ्गिरसान् द्वादशसाध्यान् एकोनपञ्चाशन्मरुद्गणान् द्वादशमेषादींल्लग्नान् मेर्वादीन्पर्वतान् आनन्दादीन्योगान् कृतिकादीनिनक्षत्राणि आदित्यादीन्ग्रहान् इन्द्रादीन्दशलोकपालान् वास्तोष्पतिदेवताः क्षेत्रपालदेवताः ब्राह्मयाद्यामातॄः गौर्याद्यामातॄः दुर्गाद्यामातॄः आत्मदेवताः परमात्मदेवतास्तर्पयामि। कण्ठोपवीती।

एकैकमञ्जलिं देवा द्वौ द्वौ तु सनकादयः । अर्हन्ति पितरस्त्रींस्त्रींस्त्रियोप्येकैकमञ्जलिम् ॥ अग्निर्ऋषिः पा- व० सनकस्तृप्यतां २ [पृ० १५५ पं० १] मनुगौतमसंवर्त विष्णुच्यवनकश्यपाः । बृहस्पत्युशनःशङ्खशातातपः पराशराः पितामहाङ्गिरोदक्षयमापस्तम्भदेवलाः । बुद्धबौधायनव्यासवसिष्ठजमदग्नयः ॥ सोमनारदहा- रीतयाज्ञवल्क्यप्रचेतसः । लिखितच्छागलेयात्रिविश्वा- मित्रमरीचयः ॥ कात्यायनोथ जाबालिपैठीनससु- मन्तवः । धर्मशास्त्रप्रणीतारः षट्त्रिंशन्मुनयश्चये ॥ ते सर्वे तृप्तिमायान्तु गोपुच्छोदकतर्पणात् ॥ ऋषीन् तर्पयामि २ परमर्षीन् महर्षीन् श्रुतर्षीन् सप्तर्षीन् मनुर्षीन् वैष्णवर्षीन् असुरर्षीन् सुरर्षीन् यक्षर्षीन् गन्धर्वर्षीन् दैत्यर्षीन् पिशाचर्षीन् सिद्धर्षीन् साध्य- र्षीन् विद्याधरर्षीन् शैवर्षीन् बौधर्षीन् योगर्षीन् ना-

गर्षीन् पर्वतस्थितर्षीन् पृथिवीस्थितर्षीन् अन्तरिक्ष-
स्थितर्षीन् दिविस्थितर्षीन् जलस्थितर्षीन् सर्वर्षीन्
ऋषिदेवताः ऋषिगोत्राणि ऋषिछन्दांसि ऋषिपु-
त्रान् ऋषिपत्नीः आपस्तम्बं सत्याषाढं हिरण्यकेशं
सनकं सनन्दनं सनातनं सनत्कुमारं कपिलं वोढं
पञ्चशिखं जाबालिं अत्रिं वसिष्ठं पुलहं पुलस्त्यं क-
श्यपं च्यवनं व्याघ्रं विष्णुं पराशरं पाराशर्यं वा-
ल्मीकिं वत्सं भारद्वाजं शौनकं लौगाक्षिं कण्वं
हारीतं जमदग्निं सुमन्तुं याज्ञवल्क्यं मनुं दक्षं भृगुं
शङ्खं मरीचिं नारदं ऋषिशृङ्गं कुशिकं गर्गं अग-
स्त्यं कुत्सं गौर्गुण्डिल्यं गौर्गुण्डीयं उपमन्युं करटं
मूषकं देवलं वर्षकर्णं शुनःशेपं प्रागाथं पावमान्यं
क्षुद्रसूक्तान् महासूक्तान् सर्वर्षिगणान्तर्पयामि २ ॥
पिता पितामहश्चैव तथैव प्रपितामहः । माता पि-

तामही तद्वत्तथैव प्रपितामही । मातामहाः सपत्नी-
का गोत्रसम्बन्धिबान्धवाः । ते सर्वे तृप्तिमायान्तु
गोपुच्छो० ॥ रौरवे पतिताः केचिद्ये महारौरवे स्थिताः।
सुवर्णहारिणो ये च क्रियालोपगताश्च ये । ये के-
चिदामयग्रस्ताः श्वभ्रादिष्वात्मघातकाः । शृङ्गिदं-
ष्ट्रिनखिव्यालैर्हता ये पापकर्मिणः । ते सर्वे ॥ अपस-
व्येन । उशन्तस्त्वा० कव्यवाडनलः स्वधा नमस्तृप्य-
ताम् ३ सोमः० [पृ० १५७ पं० १४] सुमन्तु—जैमिनि—
वैशम्पायन—पैल—सूत्रकार—महाभाषकार—महाभारत-
धर्माचार्याः स्वधा नमस्तृप्यन्तां ३ ॥ जानकि-
वाहवि—गार्ग्य—गालव-गौतम—शौनक—शाकल्य -शा-
ण्डल्य—बाभ्रव्य—माण्डूकेयान् स्वधानमस्तर्पयामि ३
गार्गीं स्वधानमस्तर्पयामि । वाचक्नीं चचालनां
आतिथेयीं सुलभां मैत्रीं कहोत्रं कौशीतकं महाकौ-

शीतकं आश्वलायनं महाश्वलायनं एतरीयं महैतरीयं गार्ग्यं वाष्कलं अजातवक्रं औदवाहिनं सौजामिं शौनकं अनुक्तगोत्रान् ऊर्ध्ववक्रान् अधोवक्रान् तिर्यग्वक्रान् पितॄन् पितामहान् प्रपितामहान् मातॄः पितामहीः प्रपितामहीः मातामहान् प्रमातामहान् वृद्धप्रमातामहान् मातामहीः प्रमातामहीः वृद्धप्रमातामहीः गुरून् गुरुपत्नीः सखीन् सखिपत्नीः अमात्यान् अमात्यपत्नीः वसून् रुद्रान् आदित्यान् अग्निष्वात्तान् बर्हिषदः हविष्मन्तः सुकालिनः समानोदकान् सोमपान् सुकर्मस्थाञ्जन्तून् स्वकर्मयातनास्थान् सर्वान् सर्वपतीःस्वधानमस्तर्पयामि ॥

शङ्खस्य त्रिष्टुप् । (पृ० १५६ पं० ३) इत्यादि श्लोकतर्पणं सर्वं कृत्वा । ततो वेदचतुष्टयीं सम्पाद्य । गायत्र्यै नमः ३ । अद्यतावत् । पृथिव्याः अग्नेः ऋ-

ग्वेदस्य ब्रह्मणः छन्दसां । अन्तरिक्षस्य वायोः यजुर्वेदस्य ब्रह्मणः छन्दसां । दिवः सूर्यस्य सामवेदस्य ब्रह्मणः छन्दसां । दिशां चन्द्रमसः अथर्ववेदस्य ब्रह्मणः छन्दसां । आत्मनो० चतुर्वेदेश्वरपूजनमच्छिद्रं सम्पूर्णमस्तु । यवोदकं नमः ।। आपन्नोस्मि । नमो ब्रह्मणे ।। ततो वेदचतुष्टयीं गोश्चतुर्दिक्षु स्वस्वमन्त्रेण प्रतिपाद्य ब्राह्मणप्रच्छां । गायत्र्यै नमः । तत्पुरुषाय वि० । 'वा' वासुदेवाय वि० । सुभगायै वि० । अद्यतावत् रुद्रस्य 'वा' (विष्णोः) सानुचरस्य नन्दायाः सुनन्दायाः सुभगायाः सुशीलायाः सुरभेः वरकामधेनोः आत्मनो० पितुर्वा मातुः परलोके सुखसन्तारणार्थं गोप्रदाननिमित्तं रुद्रपूजनं धेनुपूजनमच्छिद्रं सम्पूर्णमस्तु ।। यवोदकं नमः । क्षमापुष्पाणि । आपन्नोस्मि० या लक्ष्मीः सर्वभूता-

नां या च देवेष्ववस्थिता । धेनुरूपेण सा देवी मम पापं व्यपोहतु ॥ देहस्था या च रुद्राणां शङ्करस्य सदा प्रिया । धेनुरू० ॥ विष्णोर्वक्षसि या लक्ष्मीः स्वाहा या च विभावसौ । धेनुरू० ॥ चतुर्मुखस्य या लक्ष्मीर्लक्ष्मीर्या धनदस्य च । लक्ष्मीर्या लोकपालानां सा धेनुर्वरदास्तु मे ॥ स्वधा या पितृमुख्यानां स्वाहा यज्ञभुजामपि । सर्वपापहरा धेनुस्तस्माच्छान्तिं प्रयच्छतु ॥ सर्वदेवनिमित्ताङ्गां सर्वदेवनमस्कृताम् । प्रयच्छामि महासत्वामक्षयाय शुभाय च ॥ ग्रीष्मान्तस्था च या लक्ष्मीः समुद्रान्तस्थिता तथा । शक्रचन्द्राग्निरुद्राणां सा धेनुर्वरदास्तु मे ॥ त्वं धेनो मम दासस्य भुक्तिं मुक्तिं च कांक्षिणः । आर्तस्येवाभियुक्तस्य प्रसादं कुरु सर्वदा ॥ अथ प्रतिग्रहीतुः पुष्पं धेनोरुपरि । प्रति-

गृह्णामि देवि त्वां कुटुम्बार्थे विशेषतः । होमार्थमग्निहोत्रस्य कामधेनो नमोस्तु ते ॥ ॐह्रींश्रींस्फीं कुरुष्वप्रसादंभोःममसुरभेऽद्यविष्णुभागिनिरुद्रदुहितः–सर्वकामप्रदेप्रसादंकुरुकुरु ॥ न गोषु तुल्यं धनमस्ति किञ्चिद्दुह्यन्ति वाहन्ति हरन्ति पापम् । तृणानि भुक्त्वाप्यमृतं स्रवन्ति विप्रेषु दत्तं कुलमुद्धरन्ति ॥ उदकलशं० । मन्त्रार्थः ॥ अनन्तशाखकल्पाय० ॥ इति गोप्रदानविधिः ॥

## ॥ अथ छत्रदानम् ॥

प्रधानम् । इन्द्रं कुत्सो वृत्रहनं० । अग्निमीळे० । एषत्वोर्जे० । अग्न आयाहि० शन्नो देवी० । चातुर्वेदेश्वरेभ्यो नमः । मृद्भस्मगोमयैः स्नाप्य कषायफलवारिभिः ॥ आक्रम्य० । इह गावः । प्रसद्य

भस्मना । याः फलिनीः । उदुत्तमं ॥ तत एकविंशतिस्नानं । गायत्र्यै नमः १ निर्दग्धं २ उदुत्तमं ३ इह गावः ४ रक्षोहणं ५ बृहत्साम क्षेत्रभृद्वृष्ण्यं त्रिष्टुभौजा शुभितमुग्धवीरम् । इन्द्रस्तोमेन पञ्चदशेनौजसा इदं वातेन सागरेण रक्षयम् ६ चत्वारि शृङ्गास्त्रयो अस्य पादा द्वे शीर्षे सप्तहस्तासो अस्ति । त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यानाविवेश ७ मनसाकाममा ८ हिरण्यवर्णां हरिणीं ९ तरत्समन्धि धावति धारासुतास्योन्धसः । तरत्समन्धि धावति १० इमं मे वरुण ११ एतो न्विन्द्रं स्तवामहेऽहं शुद्धं शुद्धेन साम्ना । शुद्धैरुक्थैर्वावृद्धा संशुद्धैराशीर्वान्ममम १२ इन्द्रा पर्वता १३ वात आवात भेषजं शम्भुमयो भुवि हृदि । प्राण आयूँषि तारिषत् १४ अश्वक्रान्ते १५ अग्निर्ऋषिः

१६ ऋतं च सत्यश्चा १७ मधु वात ऋतायते १८
दधि क्राव्णो १६ या ओषधयः २० समुद्राद् २१
छत्राय एकविंशतिस्नानानि परिकल्पयामि नमः ॥
पुरुषसूक्तलक्ष्मीसूक्ताभ्यां च स्नानं ॥ आश्विलायनोक्तं
तर्पणखण्डं व्याख्यास्यामः। ब्रह्मातृप्यतां। देवास्तृप्यन्तां
अग्निः सूर्यः चन्द्रमाः इन्द्रः ग्रहाः विष्णुः रुद्रः प्रजा-
पतिः छन्दांसि वेदाः ऋषयः ओंकारः वषट्कारः
व्याहृतयः महाव्याहृतयः गायत्री सावित्री सरस्व-
ती यज्ञः द्यावापृथिव्यौ अन्तरिक्षं नक्षत्राणि संव-
त्सराः ऋतवः मासाः पक्षाः दिनानि अहोरात्रं सां
ख्याः साध्याः सिद्धाः समुद्राः नद्याः गिरयः क्षे-
त्रौषधिवनस्पतयः गन्धर्वाप्सरसः विप्राः वयांसि गा-
वः यक्षाः भूतानि ऋषयः पशवः सुपर्णाः असुराः
क्रूरास्तृप्यन्तां। ब्रह्माणं तर्पयामि विष्णुं महेश्वरं ईश्वरं

रुद्रं वह्निं सूर्यं सोमं वरुणं यमं इन्द्रं नैर्ऋतं कुवेरं ईशा-
नं केशवं पृथिवीं आपः तेजांसि वायुं आकाशं
अग्निं आदित्यं वरुणं सोमं कुमारं अङ्गारकं हरिं
सौम्यं शक्रं जीवं सरस्वतीं दैत्यगुरुं प्रजापतिं कालं
असितं गणपतिं राहुं रुद्रं केतुं परमेष्ठिनं ध्रुवं अन-
न्तं अगस्त्यं वसून् रुद्रान् आदित्यान् मरुतः सा-
ध्यान् अप्सुरसः समुद्रान् पर्वतान् नक्षत्राणि नक्ष-
त्रदेवताः देवमातृः देवपत्नीः देवकन्याः देवान् वे-
दान् वेदाङ्गानि यज्ञान् यज्ञाङ्गानि धर्मार्थकाममो-
क्षान् शास्त्रप्रणीतॄन् सत्वं रजः तमः दिक्पतीन्
विदिक्पतीन् तारकान् तीर्थानि नदीः सप्तपाताला-
न् सप्तलोकान् विश्वेदेवान् श्रियं दिवाचरान् निशा-
चरान् खेचरान् रात्रिंचरान् जलचरान् स्थावरान्
जङ्गमान् ऋग्वेदं यजुर्वेदं सामवेदं अथर्ववेदं कृत-

युगं त्रेतायुगं द्वापरयुगं कलियुगं अष्टादशपुराणानि दशविश्वेदेवान् द्वादशभृगून् चतुर्दशभुवनानि आत्मदेवताः परमात्मदेवताः चाह्यात्मदेवताः ॥ कण्ठोपवीती । अग्निर्ऋषिः० । सनकः सनन्दनः सनातनः सनत्कुमारः कपिलः आसुरिः वोढः पञ्चशिखः मरीचिः अत्रिः अङ्गिराः पुलहः पुलस्त्यः भृगुः प्रचेताः क्रतुः वसिष्ठः नारदः ऋषयः शतर्चिनः मध्यमः गृत्समदः विश्वामित्रः वामदेवः भरद्वाजः कश्यपः जमदग्न्यः प्रागाथः पावमान्यः क्षुद्रसूक्तः महासूक्तः सप्तर्षिगणः गौतमः च्यवनः विष्णुः देवलः लोमर्षिः दीर्घतपाः पराशरः पाराशर्यः वाल्मीकिः वत्सः शौनकः लौगाक्षिः कपिलः हारीतः आपस्तम्भः सुमन्तुः बौधायनः याज्ञवल्क्यः मनुः दक्षः शङ्खः ऋषिशृङ्गः कौशिकः गार्ग्यः अगस्त्यः सर्वे मुन-

यः अहिंसकाः अहिंसकाः सर्वभूताधिपतयः तृप्यन्तां । अपसव्येन । उशन्तस्त्वा हवा० (पृ० १५७ पं० १४) कव्यवाडनलः स्वधा ३ ॥ समन्तु–जैमिनि–वैशम्पायन–पैलसूत्र–भाष–भारत–महाभारतं तर्पयामि। जानाकि·बाहवि–गार्ग्य-गालव-गोबिल–शाकल्य–शौनक–सुलभा मैत्रेयं कवोडं कौशूदं पैङ्ग्यं महापैङ्ग्यं महायज्ञं स्वयज्ञं साध्यायनं आश्वलायनं औदवाहिनं महैद्वाहिनं शैशरीयं महाशैशरीयं कौशीतक्यं ऐतरीयं महैतरीयं गार्ग्यं वाष्कलंतर्पयामि। ये चान्ये आचार्यास्ते सर्वे तृप्यन्तु ॥ देवताभ्यः ३ अद्य तावत् पिता वा माता मातृपत्न्यास्तु । सव्येन । वसन्ताय नमः ६ । देवासुराः । नमो देवेभ्यः ॥ कुशब्राह्मणछत्रयोः जीवादानं। गायत्र्यै नमः ३ वज्रपाणये विद्महे सहस्राक्षाय धीमहि। तन्न इन्द्रः प्रचोद-

यात् ३ ॥ एकपादाय विद्महे आतपत्राय धीमहि। तन्नश्छत्रः प्रचोदयात् ३ ॥ अद्यतावत् इन्द्रस्य शतमन्योः छत्रस्य आत्मनो० पितुः तस्य परलोके घुर्घुरपुराख्ये देशेऽतिवृष्ट्यादिदोषनिवारणार्थं इन्द्रयुतछत्रपूजनमर्चामहं करिष्ये । इन्द्रस्य शतमन्योः इदमासनं नमः । छत्रस्येदमासनं नमः । इन्द्राय शतमन्यवे छत्राय त्वां पूजयामि इन्द्रं शतमन्युं छत्रमावाहयिष्यामि ओंआवाहय ॥ आवाहयाम्यहं देवं वज्रहस्तं शचीपतिम् । ऐरावणसमारूढं गणरुद्राप्सरोवृतम् । पीतवर्णो० ॥ आवाहयाम्यहं देवं ब्रह्मपुत्रं बृहस्पतिम् । देवानां सद्गुरुं चैव शक्रस्य च पुरोहितम् । रक्तवर्णो० ॥ इन्द्रं कुत्सो० । आवाहयाम्यहं देवं छत्रमिन्द्रेण वै युतम् । महातापप्रशमनं परलोके सुखप्रदम् । पीतवर्णो० ॥ भग-

वन्पुण्डरी० । पाद्यार्घ्यगन्धपुष्पादि । छत्रस्य पुष्पपूजा ऋग्वेदाय नमः यजुर्वेदाय नमः सामवे० अथर्ववे० कृतयुगाय० त्रेतायु० द्वापरयु० कलियु० । मित्राय वरुणाय पूष्णे धात्रे अर्यम्णे यमाय इन्द्राय विवस्वते दीप्तांशवे सूर्याय मार्तण्डाय विष्णवे मेषाय वृषाय मिथुनाय कर्कटाय सिंहाय कन्यायै तुलायै वृश्चिकाय धन्विने मकराय कुम्भाय मीनाय मेरवे मलयाय अस्ताचलाय उदयाचलाय अजैकपदिने अहिर्बुध्न्याय कृत्तिवाससे पिनाकभृते वृषाकपये सिन्धवे कपर्दिने वहुरूपाय हराय रुद्राय त्र्यम्बकाय शेषाय वृषभाय स्ववर्णाय रजताय ताम्राय हरितालाय मनश्शिलायै अभ्रकाय गन्धकाय भूर्लोकाय भुवोलोकाय स्वर्लोकाय महोलोकाय जनोलोकाय तपोलोकाय सत्यलोकाय । तलाय अत-

लाय सुतलाय वितलाय तलातलाय रसातलाय पातालाय मरीचये आत्रेयाय आङ्गिरसाय पुलस्त्याय पुलहाय कश्यपाय गौतमाय क्रतवे वसिष्ठाय नारदाय विष्णवे मनवे च्यवनाय सवर्ताय बृहस्पतये उशनसे शङ्खाय लिखिताय शातातपाय पराशराय ब्रह्मणे दक्षाय यमाय आपस्तम्बाय देवलाय बुद्धाय बौधाय व्यासाय जमदग्न्याय छागलेयाय विश्वामित्राय ऋषिभृङ्गाय कौशिकाय गर्ग्याय कौत्साय सनातनपुरुषाय अगस्त्याय शुनःलाङ्गूलाय शुनाय शुनपुच्छाय शौनकाय हारीताय कात्यायनाय जाबालाय पैठीनसाय सुमन्तवे याज्ञवल्क्याय प्रचेतसे प्रजापतये । अश्विन्यै भरण्यै कृत्तिकायै रोहिण्यै मृगशिरसे आर्द्रायै पुनर्वसवे तिष्यायै अश्लेषायै मघायै पूर्वफाल्गुन्यै उ-

त्तरफाल्गुन्यै हस्ताय चित्रायै स्वात्यै विशाखायै अनूराधायै ज्येष्ठायै मूलायै पूर्वषाढायै उत्तरषाढायै अभिजिते श्रवणाय धनिष्ठायै शतभिषजे पूर्वभाद्रपदायै उत्तराभाद्रपदायै रेवत्यै। इन्द्राय सुराधिपतये०। १० अग्न्यादित्याभ्या०। ११ चाक्षुषमन्वन्तराय रुद्रमन्वन्तराय सावर्णि० वैवस्वत० दक्षम० रैवत० सूर्य० तामस० स्वायंभुव० ब्रह्म० स्वारोचिष० हारीत० मनुम० धर्ममन्व०। सप्तर्षिमण्डलाय ध्रुवमण्ड० भीमम० सप्तपातालेभ्यः क्रतवे दक्षाय सत्याय वसवे कालाय कामाय ध्वनये रोचकाय पुरूरवाय आर्द्रवाससे आपाय ध्रुवाय सोमाय सावित्र्यै अनलाय नलाय प्रत्यूषाय प्रभासाय प्राग्दिश्यै अग्निदिश्यै दक्षिणदिश्यै नैर्ऋतिदिश्यै प्रतीचीदिश्यै वायव्यदिश्यै उदीचीदिश्यै ईशानदिश्यै उ-

र्ध्वदिश्यै अधोदिश्यै। प्राणाय अपानाय समाना-
य उदानाय व्यानाय नागाय कूर्माय कृकराय दे-
वदत्ताय धनञ्जयाय ईशानाय पर्जन्याय जयन्ता-
य इन्द्राय सूर्याय सत्याय भृशाय आकाशाय अ-
ग्नये पूष्णे वितथाय गृहक्षताय यमाय गन्धर्वाय
भृङ्गिराजाय मृगाय पितृगणाय दौवारिकाय सुग्री-
वाय पुष्पदन्ताय वरुणाय असुराय शोषाय रोगा-
य वायवे वासुकये मुख्याय बलाटाय सोमाय सू-
र्याय अदितये दितये अर्यम्णे सवित्रे सावित्रे वि-
वस्वते विबुधाधिपतये जयाय रुद्राय राजयक्ष्मणे
मित्राय पृथ्वीधराय आपाय आपवत्साय ब्रह्मणे
मधुच्छन्दसे आदित्याय रवये गभस्तिने भानवे दि-
वाकराय धर्माय अधर्माय उपमन्यवे भास्कराय
त्वाष्ट्रे स्वर्पतये अर्काय सहस्ररश्मये तप्तकाञ्चनाय

त्रिशूलाय घटिकाय एकपादाय सहस्राक्षाय इन्द्राय
शतमन्यवे छत्राय अर्घो नमः पुष्पं नमः ॥ धूप-
दीपवासांसि दक्षिणान्तं । ततः प्रतिपादयेत् । सा-
वित्राणि॰ पितुः वा मातुः तस्य परलोके घुर्घुरा-
रण्ये घर्मसंज्ञके देशे अतिवृष्ट्यादिदुःखनिवारणार्थं
इन्द्राय शतमन्यवे छत्रं षोडशकलं सहिरण्यं सवा-
ससं साज्ञं रजतमणिमुक्तकर्पटसहितं ददानि ३ ॥
"इन्द्राय वाचं वदतेन्द्राय वाचं संवदतेन्द्रं वाजं
जपयतेन्द्रं वाजं जय। इत्यादि—अन्नाय त्वा वाजाय त्वा
वाजजित्यै त्वा।" इत्यन्तमिन्द्राबृहस्पति सूक्तं पठित्वा।
प्रतिगृह्णामि ३। अक्षय्यं। ततो वदचतुष्टयीं सम्पाद्य।
गायत्र्यै नमः ३। अद्य तावत् । इन्द्रस्य सानु-
चरस्य पृथिव्याः अग्नेः आत्मनो॰ छत्रदाननिमि-
त्तं चतुर्वेदेश्वरपूजनं अच्छिद्रं सम्पूर्णमस्तु ॥ आपन्नो-

स्मि। नमो ब्रह्मणे। छत्रस्य पूर्वादिदिक्षु चतुर्वेदेश्वरान् स्वस्वमन्त्रैः समर्प्य। ब्राह्मणपृच्छां विसर्जयेत्। गायत्र्यै नमः ३ वज्रपाणये विद्महे सहस्राक्षाय धीमहि। तन्न इन्द्रः प्रचोदयात् ३। एकपादाय विद्महे आतपत्राय धीमहि। तन्नच्छत्रः प्रचोदयात् ३ इन्द्रस्य शतमन्योः छत्रस्य आत्मनो० पितुः इन्द्रयुतछत्रपूजनमच्छिद्रं। यवोदकं। आपन्नोस्मि। वर्षातपसमायुक्ते पुरे घुर्घुरसंज्ञके। तं देशं तर्तुमिच्छामि दत्वा छत्रं महीतले। ब्रह्मा विष्णुस्तथा रुद्रो लोकपालाः सतारकाः॥ सूर्याः पितृगणैः सार्धं तुष्यन्तु छत्रदानतः। आयुरारोग्यमैश्वर्यं श्रियं धैर्यं च वैभवम्। छत्रदानेन देवेश सुखं मेस्तु निरर्गलम्॥ छत्रदानात्समं दानं न भूतं न भविष्यति। छत्रदानात्महालक्ष्मीर्निश्चलास्तु मम गृहे॥

आह्वानं । नमो ब्रह्मणे । उदकलशं ॥
इति छत्रदानविधिः ॥

## ॥ अथ नौकादानविधिः ॥

आदौ मृद्भस्मगोमयैः० (पृ० १६० पं० १२) नौकायै एकविंशतिस्नानं । षोडशस्नानं । तर्पणखण्डं । ॐनमो देवेभ्य इत्यन्तं छत्रवत्कृत्वा । कुशब्राह्मणे नौकायां च जीवादानं। ॐगायत्र्यै नमः ३ । अपांपतये विद्महे पाशपाणये धीमहि। तन्नो वरुणः प्रचोदयात् ३ । नौकायै विद्महे नदीपारगामिन्यै धीमहि । तन्नो नौका प्रचोदयात् ३ । अद्य तावत् जलशायिनः हरेः विशोकस्य शैलेन्द्राणां केशवस्य वरुणस्य वरुणराजस्य जलाधिपतेः पाशहस्तस्य वारुणीसहितस्य । कूर्मस्य मकरस्य मत्स्यस्य म-

मण्डूकस्य शिशुमारस्य कूकरस्य कुलीरस्य नौकायाः आत्मनो० पितुः वैतरणीनदीसुखसन्तरणार्थं वरुणयुतनौकापूजनमर्चामहं करिष्ये। एवमेव षष्ठ्यासनं। जलशायिने हरये विशोकाय शैलेन्द्रेभ्यः केशवाय वरुणाय वरुणराजाय जलाधिपतये पाशहस्ताय वारुणीसहिताय। कूर्माय मकराय मत्स्याय मण्डूकाय शिशुमाराय कूकराय कुलीराय नौकायै युष्मान्वः पूजयामि। जलशायिनं हरिं विशोकं शैलेन्द्रान् केशवं वरुणं वरुणराजं जलाधिपतिं पाशहस्तं वारुणीसहित। कूर्मं मकरं मत्स्यं मण्डूकं शिशुमारं कूकरं कुलीरं नौकां आवाहयिष्यामि॥ आवाहयाम्यहं देवं वरुणं भक्तवत्सलम्। पाशहस्तं प्रसन्नास्यं द्विभुजं मकरासनम्॥ सुतीर्थनागराजैश्च यादोभिश्च सुसंस्तुतम्। रत्नकाञ्चनमालाढ्यं संस्मरे

मकरासनम् । नीलवर्णो० ॥ आवाहयाम्यहं नौकां भवाब्धितारणक्षमाम् । हेमदण्डयुतां भक्त्या पितृणां मुक्तिहेतवे । पीतवर्णो० ॥ ये दिव्या दिव्ये० भगवन्पुण्ड० । शन्नो देवी । पाद्यं नमः । आपः चीरं । जलशायिन् हरे विशोक शैलेन्द्राः केशव वरुण वरुणराज जलाधिपते पाशहस्त वारुणीसहित । कूर्म मकर मत्स्य मण्डूक शिशुमार कुकर कुलीर नौके इदं वोर्घ्यं नमः ॥ समालभनं गन्धो नमः ॥ पुष्पपूजा । गङ्गायै वितस्तायै यमुनायै गोदावर्यै सरस्वत्यै नर्मदायै सिन्धवे कौवीर्यै चन्द्रभागायै विपाशायै शतरुद्रै मधुमत्यै अनन्तनागराजाय कुलिकना० तक्षकना० पद्मना० महापद्मना० कार्कोटना० शङ्खपालना० वासुकिना० ऐरावताय पुण्डरीकाय वामनाय कुमुदाय अञ्जनाय

पुष्पदन्ताय सार्वभौमाय सुप्रतीकाय क्षारसमुद्राय क्षीरस० दधिस० इक्षुस० घृतस० सुरास० स्वादूदकस० । तलाय सुतलाय वितलाय रसातलाय तलातलाय अतलाय पातालाय रुद्राय तोयाय जलाय विष्णवे अद्भ्यः पानीयाय सलिलाय वायवे ब्रह्मणे पृथिव्यै अग्नये उमायै शिवाय सूर्याय वामनाय जनकाय गोविन्दाय मधुसूदनाय भृगुवे सोमाय श्रियै तीराय कूर्माय मकराय मत्स्याय मण्डूकाय शिशुमाराय दुन्दुभाय कुलीराय गन्धमादनाय कूपपर्वताय घण्टालकाय इन्द्राय कण्डूलकाय वृषभाय धूम्राय चन्द्रमसे अशोकाय विशोकाय द्रोणाय वराहाय चन्दनाय बलाहकाय इन्द्राय वज्रहस्ताय १० अग्न्यादित्याभ्यां० ११ । अश्विन्यै भरण्यै कृत्तिकायै (पृ० १६८ पं० १२) जलशायिने

हरये विशोकाय शैलेन्द्रेभ्यः केशवाय वरुणाय व-
रुणराजाय जलाधिपतये पाशहस्ताय वारुणीसहि-
ताय । कूर्माय मकराय मत्स्याय दुन्दुभाय मण्डू-
काय शिशुमाराय कुलीराय नौकाय अर्घो नमः
पुष्पं नमः ॥ दक्षिणां दत्त्वा प्रतिपादयेत् । सावि-
त्राणि अद्य तावत् पितुर्वैतरणीनदीसुखसन्तरणार्थं,
नमामि परया भक्त्या नौकादेवीं महेश्वरीम् । भ-
वसन्तारणार्थाय सद्विप्राय ददाम्यहम् ॥ वरुणरू-
पाय विष्णवे इमां नौकां सवस्त्रांसान्नां सहिरण्यां ददा-
नि ३ "स्वादारभक्ति वयस" इत्यादि चन्द्रसूक्तं पठित्वा
प्रतिगृह्णामि ३ । अक्षय्यं । अद्य तावत् । आ-
त्मनो० पितुरूनषाण्मासिके नवमे एकोद्दिष्टश्राद्धे
वरुणनौकाप्रीत्या तिलाम्भसा० । पृच्छां । गायत्र्यै
नमः ३ अपांपतये वि० ३ नौकायै वि० ३ अद्य

तावत् वरुणयुतनौकापूजनमञ्छिद्रं ॥ यवोदकं। आपन्नोऽस्मि। नौके तारय मे प्रेतं वैतरण्यां सुखेन वै। यथा तस्य व्यथा न स्यात्तथा कुरु जनप्रिये। परलोकहिता त्वं हि तारय घोरसङ्कटात्। नदीनां तारकृद्देवि क्षमां कुरु महेश्वरि ॥ आह्वानं नमो ब्रह्मणे। उदकलशं। आदौ छत्रदानं ततो नौकादानं ततो गोप्रदानं ततो गायत्र्यै नमः ब्राह्मणपूजनं कार्यम् ॥ इति नौकादानविधिः ॥

## अथ दीपश्राद्धविधिः

आदौ ब्रह्मकलशं तद्दक्षिणतोऽष्टौ सदीपकलशान्मध्ये प्रतिमाकलशं संस्थाप्य ॥ "अभि नो देवी–वषट् ते विष्णा" तावत्। प्रधानं। तद्विष्णोः० वासुदेवाय नमः ८। दीपकलशेषु। (पूर्वे) नवो गुहा

चक्रमभूरि दुष्कृतं नाविष्टं वसवो देवहेडनम् । मा
किन्नो देवा अनृतस्य वर्पसा आसर्वतातिमादितिं
वृणीमहे ॥ (दक्षिणे) एवा वसिष्ट इन्द्रमूतये नृन्कृ-
ष्टीनां वृषभं सोतिगृह्णाति । सहस्रिण उप नो
पाहि वाजान्यूयं पातु स्वस्तिभिः सदा नः ॥
(पश्चिमे) न त्वामग्ने एमहे वसिष्ठ इशानंसूनो सह-
सो वसूनाम् । इषं स्तोत्रेभ्यो मघवद्भ्य आनन्यूयं
पातु स्वस्तिभिः सदा नः ॥ (उत्तरे) अपां मीवा-
सो सविता त्रिषण्यध्वरीय इदऽपसेधात्विन्द्रियाः ।
ग्रावा यत्र मधुषु दुह्यते बृहदाऽऽसर्वतातिमादितिं
वृणीमहे ॥ (मध्ये कर्णिकायां) तेजोसि शुक्रमसि० ।
(आग्नेये) इन्द्रा पर्वता । अग्नि सर्सि । (नैर्ऋते) यमो
दधार । यन्ते देवी । (वायव्ये) उदुत्तमं । वाय-
वायाहि । (ईशाने) सोमो धेनुं । इशानं त्वा ।

(पूर्वे) सीतायै नमः, राघवाय नमः, लक्ष्मणाय ॥ (दक्षिणे) रुद्राय दाक्षायिण्यै । (पश्चिमे) सूर्याय छायायै । (उत्तरे) चन्द्रमसे रोहिण्यै । (आग्नेये) इन्द्राय अग्नये । (नैर्ऋते) यमाय नैर्ऋतये । (वायव्ये) वरुणाय मरुते । (ईशाने) धनदाय ईशानाय । (मध्ये) ज्वालायुताय दीपराजाय अनन्तबाहुचरण-शिरोमुखाय । क्षेत्रस्य पतिना । तेजाय चण्डाय । ऐन्द्राग्नं ॥ अ नाभौ । पुरुषसूक्तेनच ॥ तीर्थे स्नेयं । अद्य तावत् महागणपतये वासुदेवाय ८ पूर्वे सीता-युताय राघवाय सलक्ष्मणाय । दक्षिणे दाक्षायि-णीयुताय रुद्राय । पश्चिमे छायायुताय दिवाकरा-य । उत्तरे रोहिणीयुताय चन्द्रमसे । आग्नेये इन्द्रा-ग्निभ्यां । नैर्ऋते यमनैर्ऋतिभ्यां । वायव्ये पाशि-मरुद्भ्यां । ईशाने धनदशङ्कराभ्यां । मध्ये कर्णिकायां

ज्वालायुताय दीपराजाय अनन्तशिरोमुखाय अनन्तबहुचरणाय तेजाय चण्डाय दीपश्राद्धनिमित्ते कान्तासहितमाधवक्रियासहितगोविन्दप्रीत्यर्थं पित्रे त्रिष्णवे दीपो नमः धूपो नमः। अपसव्येन। समस्तमातापितृभ्यो दीपः स्वधा। कुम्भोवनिष्ठो। सव्येन। दीपान् प्रज्वाल्य परिकल्पयेत्। तत्रादौ पूर्वं। स्वप्रकाशो०। यत्रास्ति माता०। यस्मिल्लोके निरालोके न सूर्यो नापि चन्द्रमाः। तमहं तर्तुमिच्छामि दीपं दत्त्वा जनार्दन॥ प्रेतस्य शून्यरूपस्य यामे मार्गे प्रयासतः। तमोन्धकारसन्दोहं नाशयाशु जनार्दन॥ प्रेतस्य वायुरूपस्य यामे मार्गे यियासतः। क्षिप्रं नाशय मोहान्ध्यं भालनेत्र नमोस्तु ते॥ यामैः पाशैर्विकृष्टस्य प्रेतस्य पथि यास्यतः। ज्वालासंस्थे महालक्ष्मि तमोन्ध्यं नाशयाशु मे॥

भगवन्देवदेवेश शङ्खचक्रगदाधर । राघवाख्यं महादीपं लक्ष्मणेन समन्वितम् । सीतया सहितमद्य प्रेतलोके हिताय वै । अर्पयामि महाबाहो तव हस्ते जनार्दन ॥ अद्य तावत् । पितुर्विष्णोस्तस्य परलोके प्रकाशवृद्ध्यर्थं नानायोनि भ्रमणरूपमहामोहान्धकारनिवारणार्थं कान्तासहितस्य माधवस्य क्रियासहितस्य गोविन्दस्य प्रीत्यर्थं पूर्वे सीतायुतराघवसलक्ष्मणदीपं सान्नं परिकल्पयामि नमः ॥ १ ॥ दक्षिणे स्वप्रकाशो० । यत्रास्ति माता० । यस्मिल्लोके० । प्रेतस्य वायुरूपस्य० । यामैः पाशै० । भगवन्देवदेवेश दाक्षायणीयुतं शुभम् । रुद्राख्यं च महादीपं प्रेतलोके हिताय च । अर्पयामि महाबाहो तव हस्ते जनार्दन ॥ अद्य तावत् पितुर्विष्णोः० कान्तासहितस्य० दक्षिणे दाक्षायणीयुतरुद्रदीपं सान्नं

परिकल्पयामि नमः ॥ पश्चिमे स्वप्रकाशो० । भगवन्देवदेवेश दीपं दिवाकराभिधम् । सच्छायं प्रेतलोकऽस्य प्रेतस्य हि हिताय वै । अर्पयामि० ॥ अद्य तावत् पितुर्विष्णोः० कान्तासहितस्य० पश्चिमे छायायुतदिवाकरदीपं सान्नं परिक० ॥ उत्तरे स्वप्रकाशो० । भगवन्देवदेवेश दीपं च रोहिणीयुतम् । चन्द्रमोनाम प्रेतस्य परलोके हिताय वै । अर्पयामि० ॥ अद्य तावत् पितुर्विष्णोः० कान्तासहितस्य० उत्तरे रोहिणीयुतचन्द्रमोदीपं सान्नं परिक० ॥ अग्नये स्वप्रकाशो० । भगवन्सर्वतत्त्वज्ञ इन्द्राग्न्याख्यसुदीपकम् । अर्पयामि० ॥ अद्य तावत् पितुर्विष्णोः० । कान्तासहितस्य० अग्नये इन्द्राग्निदीपं सान्नं परिक० ॥ नैर्ऋते स्वप्रकाशो० । भगवन्सर्वतत्त्वज्ञ यमनैर्ऋतिनामकम् । अर्पयामि ॥

अद्य तावत् पितुर्विष्णोः० कान्तासहितस्य० नैर्ऋते यमनैर्ऋतिदीपं सान्नं परिक० ॥ वायव्ये स्वप्रकाशो० । भगवन्देवदेवेश पाशमारुतदीपकम् । अर्पयामि० ॥ अद्य तावत् पितुर्विष्णो० कान्तासहितस्य० वायव्ये पाशिमरुद्दीपं सान्नं परिक० ॥ ईशाने स्वप्रकाशो० । भगवन्देवदेवेश धनदशङ्करावदम् । अर्पयामि० ॥ अद्य तावत् पितुर्विष्णो० कान्तासहितस्य० ईशाने धनदशङ्करदीपं सान्नं परिक० ॥ मध्ये रत्नदीपे नमोस्तु रामाय सलक्ष्मणाय देव्यै च तस्यै जनकात्मजायै । नमोस्तु रुद्रेन्द्रयमानलेभ्यो नमोस्तु चन्द्रार्कमरुद्गणेभ्यः ॥ ज्वलायुतं परमभूषणभूषिताङ्गं नानाभिधानयतिसेवितदीपराजम् । सङ्कल्पयामिपरलोकनिवासिप्रेतघोरान्धकारशमनाय प्रकाशरूपम् ॥ स्वप्रकाशो० । नमः पितृभ्यः० ।

यज्ज्योतिः परमं लोके तमोमोह निवारणम् । तज्ज्योतिर्देवरूपेण दीपोयं परिकल्पितः ॥ बिन्दुनादकलातीतं भजामि स्वर्णवर्त्तिकम् । रौप्यपात्ररतं तेजो महामोहान्ध्यनाशनम् ॥ अद्य तावत् पितुर्विष्णोस्तस्य परलोके प्रकाशवृद्ध्यर्थं घोरान्धकारनिवारणार्थं (मध्ये कर्णिकायां) ज्योतीरूपं दीपराजं रत्नदीपं परिकल्पयामि नमः ॥ ततो विष्णोः पुष्पं क्षिपत् । यत्रावकाशं लभते न दीपो न चन्द्रमा नाग्निविभावसू वा । छेद्यं न यत्सर्वमणिप्रकाशैस्तदन्तरान्ध्यं कुरु कृष्ण दूरम् ॥ ततोऽश्विनौ इति जीवादाम् । ततो देवस्य न्यासः । ॐ गायत्र्यै नमः ३ सर्वा विष्णुगायत्रीः । स्वप्रकाशाय विद्महे ज्योतीरूपाय धीमहि । तन्नः प्रकाशः प्रचोदयात् ३ अद्य तावत् महागणपतेः० ऋतुपतेर्नारायणस्य

वासुदेवस्य ८ (पूर्वे) सीतायुतस्य राघवस्य सलक्ष्मणस्य । (दक्षिणे) दाक्षायणीयुतस्य रुद्रस्य । (पश्चिमे) छायायुतस्य दिवाकरस्य । (उत्तरे) रोहिणीयुतस्य चन्द्रमसः । इन्द्राग्न्योः यमनैर्ऋत्योः पाशिमरुतोः धनदशङ्करयोः अनन्तबाहुचरणशिरोमुखस्य ज्वालायुतस्य दीपराजस्य तेजस्य चण्डस्य आत्मनो० कान्तासहितमाधव क्रियासहितगोविन्द प्रीत्यर्थं पितुर्विष्णोः सानन्दीपश्राद्धनिमित्तं तस्य परलोके प्रकाशवृद्ध्यर्थं० विष्णुपूजनं कलशपूजनं दीपराजपूजनमर्चामहं करिष्ये । पुरुष एव ध्रुवा द्यौरित्यासनम् ॥ म[illegible]गणपतये० वासुदेवाय० सीतायुताय राघवाय सलक्ष्मण[illegible] । दाक्षायणीयुताय रुद्राय । छायायुताय दि[illegible]य। रोहिणीयुताय चन्द्रमसे । इन्द्राग्निभ्यां यमनैर्ऋति-

भ्यां पाशिमरुद्भ्यां धनदशङ्कराभ्यां अनन्तबाहुचरणशिरोमुखाय ज्वालायुताय दीपराजाय तेजाय चण्डाय युष्मान्वः पूजयामि ॐपूजय । महागणपतिं कुमारं श्रियं सरस्वतिं० । वासुदेवं० ८ । सीतायुतं राघवं सलक्ष्मणं दाक्षायणीयुतं रुद्रं च्छायायुतं दिवाकरं रोहिणीयुतं चन्द्रमसं इन्द्राग्नी यमनैर्ऋती पाशिमरुतौ धनदशङ्करौ अनन्तबाहुचरणशिरोमुखं ज्वालायुतं दीपराजं तेजं चण्डमावाहयिष्यामि ॐमावाहय ॥ यवान्विकीर्य । आवाहनं विष्णोः प्रतिमायाः । आवाहयाम्यमरवृन्दनुताङ्घ्रि० अनादिनिधनं देवं सकिरीटकमण्डलुम् । शङ्खचक्रगदापद्म[illegible]मालाविभूषितम् । चतुर्भुजं कृष्णवर्णं धात्रीचरणसंयुगम् । देवमावाहये विष्णुं निष्कृत्यर्थं पितॄन्सदा ॥ दीपकलशेषु तत्रादौ (पूर्वे) आवाहया-

मि विबुधार्चितपादपीठं श्रीराघवं रघुवरं कमनीयरूपम् । सीतायुतं सकललोकनुतं वरेण्यं घोरान्धकारशमनाय प्रकाशरूपम् ॥ आवाहयाम्यहं देवं राघवं सीतया युतम् । सलक्ष्मणं चतुर्बाहुं नानालङ्कारभूषितम् ॥ तेजोरूपं सदाकान्तं कान्तया सहितं विभुम् । परलोकगतस्याद्य प्रेतस्य मुक्तिहेतवे । श्यामवर्णो० ॥ प्रतद्विष्णु० । (दक्षिणे) आवाहयामि गणसेवितपादपीठं तेजोमयं तपनवह्निशशाङ्कनेत्रम् । दाक्षायणीयुततनुं वृषभाधिरूढं घोरान्धकारशमनाय प्रकाशरूपम् ॥ आवाहयाम्यहं रुद्रं दाक्षायण्या समन्वितम् । घोरमोहान्ध्यशमनं परलोके प्रकाशकम् ॥ शुक्लवर्णो० । योरुद्रो० ॥ (पश्चिमे) आवाहयामि सुरसेवितपादयुग्मं तेजोनिधिं दशशतैः किरणैरुपेतम् । छायायुतं मनुजवृन्दसुरै-

नमस्य घोरान्धकार० ॥ आवाहयाम्यहं देवं छा-
यायुक्तं दिवाकरम् । मोहान्धकारशमनं परलोके
प्रकाशदम् । रक्तवर्णो० ॥ आ कृष्णेन० । (उत्तरे)
आवाहयामि मुनिवन्दितपादयुग्मं तारापतिममृतरू-
पकलानिधानम् । श्रीरोहिणीयुततनुममरेशवन्द्यं घो-
रान्धका० ॥ आवाहयाम्यहं चन्द्रं रोहिण्याश्लिष्ट-
मादरात् । निशायामपि तामिस्रहास्तिनो हनने ह-
रिम् । शुक्लवर्णो० ॥ या ते धामानि० । (आग्नेये)
आवाहयामि वरदाविन्द्राग्नी दीपसंज्ञकौ । नाना-
तेजोभिः संयुक्तौ सर्वदेवनमस्कृतौ ॥ परलोकगत-
स्याद्य प्रेतस्य मुक्तिदायिनौ ॥ आवाहयामि त्रिदशार्चि-
तपादयुग्मामिन्द्रं गजाधिपगतं सुरलोकनाथम् । वह्निं च
विश्वजनपापनिषूदनं तं घोरान्ध० ॥ इन्द्रापर्व० । अग्नि
स० । (नैर्ऋते) आवाहयामि लोकेशौ यमनैर्ऋतिसंज्ञकौ ।

यमनियमसंयुक्तौ दीपरूपौ मनोरमौ। परलोकग०। आवाहयामि महिषाश्रितपादपीठं शान्तं समस्तजनताहरणप्रभावम्। रक्षोधिपं च रमणीयजटाकलापं घोरान्धका०॥ यमोदा०। यन्ते दे०। (वायवे) आवाहयामि लोकेशौ वायव्यां दीपसंज्ञकौ। जलप्राणाधिपौ देवौ पाशिमारुतसंज्ञकौ। परलोक०॥ आवाहयामि वरुणं जलजन्तुपं तं श्रीवारुणीयुततनुं मकराधिरूढम्। वायुं च सर्वगतपाचितविश्वरूपं घोरान्धका०॥ उदुत्तमं०। वायवा०। (ईशाने) आवाहयामि देवेशौ पूज्यौ धनदशङ्करौ। दीपरूपधरौ शान्तौतेजोभिः परिमण्डितौ। परलोक०॥ आवाहयामि धनदं प्रमथेशभृत्यं मत्यासनं निधिपतिं गुह्यकादिवन्द्यम्। श्रीशङ्करं च विबुधेशनुतं वरेण्यं घोरान्धका०॥ सोमो धेनुं०। यो रुद्रो०। कर्णिकायां॥ आवाहयमि बहुपादभुजोदराढ्यं श्रीवत्समण्डततनुं बहुव-

ऋयुक्तम् । ज्वालायुतं सकलमध्यविराजमानं घोरान्धकाः ।। सहस्रशीर्षाः पु० । क्षेत्रपालेषु । आवाहयामि क्षेत्रेशौ तेजचण्डौ महाधियौ । शूरौ सर्वगतौ सिद्धौ प्रेतस्यास्य विमुक्तये ।। क्षेत्रस्य पति० भगवन्पुण्डरीकाक्ष० । दक्षिणान्तं । वैश्वदेवादि नित्यकर्म कृत्वा, राघवादीनां मीनमांसयुतापूपिकाबलिं । राघवाद्या महादीपाः परलोके प्रकाशदाः । अपूपान् मीनसंयुक्तान् गृह्णीध्वं प्रेतमुक्तये ।। ओं तत्सद्ब्रह्म० पितुर्विष्णोर्दीपश्राद्धे कान्तासहित० (पूर्वे) सीतायुताय राघवाय सलक्ष्मणाय (दक्षिणे) दाक्षायणीयुताय रुद्राय (पश्चिमे) छायायुताय दिवाकराय (उत्तरे) रोहिणीयुताय चन्द्रमसे (आग्नेये) इन्द्राग्निभ्यां (नैर्ऋते) यमनैर्ऋतिभ्यां [वायवे] पाशिमरुद्भ्यां [ईशाने] धनदशङ्कराभ्यां (मध्ये) अनन्तबाहुचरणशिरोमुखाय विश्वरूपा-

य दीपराजाय । मीनमांसयुताऽपूपिकावलिं समर्पयामि नमः इति दत्वा ॥ अष्टौ वा चतुरो ब्राह्मणानुदङ्मुखानुपविश्य स्वपितृयुतान्देवांश्च स्मृत्वा श्राद्धमारभेत ॥ आचम्य ओं भूःपुरुषमावाहयामि नमः ३ नमोऽस्त्वनन्ताय० सर्वा विष्णुगायत्रीः । स्वप्रकाशाय विद्महे ज्योतीरूपाय धीमहि । तन्नः प्रकाशः प्रचोदयात् ३ अद्य तावत् कान्तासहितमाधवक्रियासहितगोविन्दप्रीत्यर्थं पितुः विष्णोः परलोके प्रकाशवृद्ध्यर्थं मोहान्धकारनिवृत्यर्थं दीपश्राद्धे ब्राह्मणपूजनमर्चामहं करिष्ये० तिलान्विकीर्य । पितुः विष्णोरिदमासनं नमः । पित्रे विष्णवे त्वां पूजयामि । पितरं विष्णुमावाहयिष्यामि । यवान्विकीर्य। शन्नोदेवी । लाजाश्च० पित्रे विष्णवे पाद्यं नमः । आचम्य । शन्नोदेवी । आपः क्षीरं । पितः विष्णो

दीपश्राद्धे कान्तासहित० इदं ते अर्घ्यं नमः । पित्रे विष्णवे समालभनं गन्धो नमः । आचम्य । पित्रे विष्णवे अर्घपुष्पदीपधूपवासो नमः । पितुर्विष्णोरर्घ्यदानाद्यर्च० । इदमन्नमिदं देवेभ्यः भृतमभिघार्य । अन्नाल्याग्रतो भक्षणमवद्धाति । श्रियै गन्धादि । प्रणवं मनसा ध्यात्वा । ओंओं क्षीरं घृतमासिच्य । पित्रे विष्णवे अन्नं नमः २ अन्नं मधु २ पृथिवीते० । पृथिव्यै नमः विष्णवे नमः विष्णो इदं रक्षस्व । पित्रे विष्णवे यथोपस्थितं० । शन्नोदेवी । पित्रे विष्णवे अपोशानं नमः । अमृतेन सह भोक्तव्यमसुरा निवर्तन्तां विष्णवादयः कारणा आगच्छन्तु ॥ दीपाग्रे पूर्वाग्रान्दर्भान् आस्तीर्य । पित्रे विष्णवे दीपश्राद्धे कान्तास० भूपृष्ठे अवनेजनं नमः उशन्तस्त्वा हवामहे । तिलास्तोयं पाथेयं न्नित्यानं पिण्ड-

स्थाने परिकल्प्य। अपसव्येन। देवताभ्य:० अद्यतावत्
पितः विष्णो एतत्ते पाथेयं नित्यान्नमित्यभिमंत्रयेत्।
सव्येन पित्रे विष्णवे वासांसि नमः। गन्धो नमः। अर्घो
नमः पुष्पं नमः। भक्ष्यभोज्य। तिलमधुमिश्रं।
पित्रे विष्णवे हिमपानं नमः रजतं २। आचम्य।
वसन्ताय नमः। चण्डै महालक्ष्म्यै अम्बामातृकाभ्यः
ॐनमो नैवेद्यम्। इति रक्तगुग्गुलयुतमन्नमभिमंत्र्य च-
ण्डाल्यै देयम। मा मे क्षेष्ठाः। नैवेद्यम्। सर्वम-
न्नमुपादाय दीपश्राद्धं कच्चित्सम्पन्नं भोः सुसम्पन्नम्
तृप्यंतु भवन्तः तृप्ता स्मः विष्णुस्तृप्यतु॥ शेष-
मन्नमिष्टैर्मित्रपुत्रभृत्यैः सार्धं पश्चाद्भुञ्जीत वाग्यतः॥
आचम्य। पित्रे आचमनीयं नमः। शन्नोदेवी।
दक्षिणायै। अक्षय्यं विना। क्षेत्रेशबलिः। ततः
प्रतिमाया दीपराजानां च पृच्छां सम्पाद्य। ॐभूःपुरु-

षं वि० ३ नमोस्त्वनन्ताय ३ वासुदेवाय० ३ जितन्ते० ३ नमः कारणा० ३ विश्वरूपाय० ३ नरसिंहाय० स्वप्रकाशाय० ३ अद्य तावत्० वासुदेवस्य ८ 'पूर्वे' सीतायुतस्य राघवस्य सलक्ष्मणस्य 'दक्षिणे' दाक्षायणीयुतस्य रुद्रस्य 'पश्चिमे' च्छायायुतस्य दिवाकरस्य 'उत्तरे' रोहिणीयुतस्य चन्द्रमसः इन्द्राग्न्योः यमनैर्ऋतयोः पाशिमरुतोः धनदशङ्करयोः अनन्तबाहुचरणशिरोमुखस्य ज्वालायुतस्य दीपराजस्य तेजस्य चण्डस्य आत्मनो० पितुः विष्णोः तस्य परलोके वैकुण्ठपदवीप्राप्त्यर्थं कान्तासहितमाधवक्रियासहितगोविन्दप्रीत्यर्थं विष्णुप्रतिमासहित—दीपराजपूजनमच्छिद्रं । यवोदकं नमः आपन्नोस्मि० ध्येयः सदा० । प्रसीद भगवन्विष्णो प्रसीद पुरुषोत्तम । प्रसीद देवदेवेश प्रसीद गरुडध्वज ॥ नमः कमलनाभाय नमः कैटभसूदन ।

लोकनाथ नमस्तेस्तु वीरभद्र नमो नमः ॥ नमः कृष्णाय रामाय नमश्चक्रायुधाय च । नमः कमलनेत्राय नमः कमलमालिने ॥ अथ पूर्वे । यत्सन्निधानेन विना जगत्स्यादसत्खपुष्पेण समं समग्रम् । तद्वापि न स्यात्किमुतान्ध्यरूपं तं स्वप्रकाशं प्रनतोस्मि देवम् ॥ 'दक्षिणे' जले स्थले वा दिवि भूतले वा बुधेऽबुधे वाप्यजडे जडे वा। सर्वत्र यत्स्यादवभासमानं समप्रभं तं प्रनतोस्मि देवम् ॥ 'पश्चिमे' विकारिषु स्थावरजङ्गमेषु भावेषु दृश्येषु न दृश्यमानम् । विश्वान्तरालस्थमरालवृत्तमनन्तमाद्यं प्रनतोस्मि देवम् ॥ 'उत्तरे' शान्तं सुसौम्यं त्रिपुटीवहिस्थं द्रष्टारमाद्यं पुरुषं पुराणम् । सर्वस्य दातारमनन्तवीर्यमात्मानमीशं प्रणतोस्मि देवम् ॥ 'मध्ये' सहस्रशीर्षाननबाहुपादं मोहापहं दीप्ततया समन्तात्।

स्थितं जगत्पद्मसुकर्णिकायां ज्वालायुतं तं प्रणतो-स्मि देवम् ॥ पुनः पूर्वे । मोहान्धकारप्रशमं प्रदीपं नतोस्मि विष्णुं त्रिदिवेशतुल्यम् । शचीयुतो वज्र-धरो महेन्द्राकारेण यः पाति पुरन्दराशाम् ॥ 'आग्नेये' मोहान्धकारप्रशमं प्रदीपं नतोस्मि विष्णुं त्रिदिवेशरूपम् । तेजःपतिर्वह्निदिशं सदा यः स्वा-हापतिः याति हुताशरूपः ॥ 'दक्षिणे' घोरान्ध-कारप्रशमं प्रदीपं नतोस्मि विष्णुं च यमस्वरूपम् । प्रेताधिपो दण्डधरः स्वशक्त्या पात्यन्तकात्मा सहि दक्षिणाशाम् ॥ 'नैर्ऋते' घोरान्धकारप्रशमं प्रदीपं नतोस्मि विष्णुं निर्ऋतिस्वरूपम् । रक्षोधिपः खड्ग-धरः स्वशक्त्या पात्यर्चितो दक्षिणपश्चिमां यः ॥ 'पश्चिमे' घोरान्धकारप्रशमं प्रदीपं नतोस्मि विष्णुं वरुणस्वरूपम् । जलाधिपः पाशयुतः प्रतीचीं यः

पाति वारुण्यधिपो दयालुः ॥ 'वायव्ये' घोरान्धकारप्रशमं प्रदीपं नतोऽस्मि विष्णुं श्वसनस्वरूपम् । प्राणाधिपः वायुदिशं करस्थध्वजोऽनिशं पाति सदागतिर्यः ॥ 'उत्तरे' घोरान्धकारप्रशमं प्रदीपं नतोऽस्मि विष्णुं धनदस्वरूपम् । गदायुधो यक्षपतिर्दिशं यः पात्युत्तरामुत्पलनेत्रधारी ॥ 'ईशाने' घोरान्धकारप्रशमं प्रदीपं नतोऽस्मि विष्णुं गिरिशस्वरूपम् । सर्वाधिपः शूलधरो दिशं यः पूर्वोत्तरां पाति गणैः समर्च्यः ॥ पुनः पूर्वे । सीतायुतं नौमि सलक्ष्मणं त्वां तेजोमयं राघवमर्च्यमैन्द्र्याम् । यद्दुष्कृतं स्यान्नवरन्ध्रजातं तत्सर्वमान्ध्यं क्षपयाशु विष्णो ॥ 'दक्षिणे' दाक्षायणीयुक्तमहं प्रपद्ये त्वां रुद्रमर्काग्निशशांकनेत्रम् । यद्दुष्कृतं० ॥ 'पश्चिमे' छायायुतं नौमि दिवाकरं त्वामर्च्य प्रतीच्यां त्रिज-

गत्प्रकाशम् । यद्दुष्कृतं स्यान्नवरन्ध्रजातं तत्सर्वमान्ध्यं क्षपयाशु विष्णो 'उत्तरे' त्वां रोहिणीयुक्तमहं प्रपद्ये प्रपूजितं चन्द्रमथोत्तरस्याम् । यद्दुष्कृतं स्यान्नवरन्ध्रजातं तत्सर्वमान्ध्यं क्षपयाशु विष्णो ॥ 'मध्ये' सूर्यो न यत्राग्निविधू भवेतां मोहान्ध्यमार्गे गतिराश्रयो वा । छेद्यं न यत्सर्वमणिप्रकाशैस्तदन्तरान्ध्यं कुरु कृष्ण दूरम् ॥ त्वमेव पापहा देवो भुक्तिदो मुक्तिदा सदा । इह लोके परत्रापि रक्षको भव केशव ॥ क्षमस्व मम दीप त्वं शम्भोर्नेत्रसमुद्भव । तावच्छिवपुरीं गच्छ यावत्प्रज्वाल्यते पुनः ॥ क्षमेतां क्षेत्रपालौ वां नानासिद्धिप्रदायकौ । नानालङ्कारसंयुक्तौ गच्छेतां स्वगृहं प्रति ॥ आह्वानं० । नमो ब्रह्मणे० । ततो दीपकलशौ साक्षौ पूर्वादितो यथाक्रमं ब्राह्मणा प्रति-

पादयेत ॥ सावित्राणि० अद्य तावत् कान्तासहितमाधवक्रियासहितगोविन्द प्रीत्यर्थं पितुर्विष्णोस्तस्य परलोके प्रकाशवृद्ध्यर्थं मोहान्धकारनिवारणार्थं 'पूर्वे' सीतायुतराघवसलक्ष्मणदीपं सकलशं सहिरण्यं सवाससं सान्नं विष्णुरूपाय ब्राह्मणाय ददानि ३ प्रतिगृह्णामि १। एवं 'दक्षिणे' दाक्षायणीयुतरुद्रकलशदीपं० २। 'पश्चिमे' छायायुतदिवाकरकलशदीपं ३। 'उत्तरे' रोहिणीयुतचन्द्रमःकलशदीपं ४। आग्नेये इन्द्राग्निकलशदीपं ५। 'नैर्ऋते' यमनैर्ऋतिकलशदीपं ६। 'वायवे' पाशिमरुत्कलशदीपं ७। 'ईशाने' धनदशङ्करकलशदीपं ८। 'मध्ये कर्णिकायां' अनन्तशिरोमुखज्वालायुतदीपराजकलशदीपयुतविष्णुप्रतिमां ९ ॥ नित्यकुम्भम् ॥ कलशं शुभदं० अद्य तावत्० । इमं नित्यकुम्भं

सहिरण्यं० ॥ ततोऽक्षय्यम् । अद्यतावत्० कान्तासहितमाधवक्रियासहितगोविन्दप्रीत्यर्थं पितुः विष्णोः दीपश्राद्धनिमित्ते दत्तमन्नमक्षय्यमस्तु स्वधा नमः । यदन्नमक्षय्यमुपतिष्ठतु स्वधा नमः ॥ ओंभूः पुरुषमिति ब्राह्मणपृच्छां विसर्जयेत् । अद्य तावत्० पितुर्विष्णोस्तिलोदकं दत्त्वा अपसव्येन । नित्यकुम्भं अद्य तावत्० पितुः विष्णोः दीपश्राद्धनिमित्ते कान्तासहितमाधवक्रियासहितगोविन्द० सोदकुम्भान्नदानसहिते नित्यकुम्भे एतत्ते तिलोदकमेतत्ते उदकतर्पणम् ॥ सव्येन । गवां ग्रासादि । कलशाच्छिद्रम् । पात्राणि चालयेत् । आचम्य उदकलशं । मन्त्रार्थाः० । अद्य तावत्० पितुर्विष्णोस्तस्य परलोके पाददाहादिपीडानिवारणार्थं तृणासनं तृणपादुकं काष्टपादुकमग्निभाण्डं ददानि ३ ॥ अनन्तशाखकल्पाय० ॥ सन्ध्याकाले

प्रज्वलुद्दीपाष्टकस्य स्थापनाश्रयाः ॥ "[1]गो[2]देवशू-न्या[3]गारेषु [4]नद्यां [5]तीर्थेऽध्वनि[6] स्मृता । [7]गोवि-ट्राशौ चतु[8]र्मार्गो ज्वलद्दीपस्थितिः निशि ॥

सामग्री । शालिचूर्णं अक्षोटाः १५ दीपाः २० तृणासनं काष्ठपादिका अपूपाः २० मीनमांसं तृणश्रारि २० स्ववर्णदीपः रजतवर्तिका यज्ञोपवीत ६ तिला मधु दधि क्षीरं वस्त्रम् तिलतैलम् अग्निभाण्डं डण्डं काष्ठपीठिका विष्णुप्रतिमा तस्या उपकरणानि च ॥

गोगृहे, देवालये, शून्यालये, नद्यां, तीर्थे, मार्गे, गोमयराशौ, चतुष्पथे च स्थाप्या दीपाः ॥

इति दीपश्राद्धविधिः ॥

## ॥ अथ गायत्रीब्राह्मणम् ॥

अस्य श्रीमहागायत्रीब्राह्मणमन्त्रस्य प्रजापतेर्भूलोकस्यानुष्टुप् ककुभापृथिवी ऋषिः, विराट्छन्दः,

ब्रह्मा देवता, प्रणवऋषिः, गायत्रं छन्दः, परमाग्नि-
वायुर्देवता, व्याहृतीनां जमदग्निभारद्वाजभृगव ऋष-
यः, अग्निवायुसूर्या देवताः, आत्मनो वाङ्मनः० सू-
र्याद्यावाहनपूर्वकं श्रीमहागायत्रीप्रीत्यर्थं होमे पाठे वा
विनियोगः ॥ ओंकारो यस्य मूलं० । मुक्तावि० ।
आयातु वरदादेवी० । ३ ॥ "ओंअग्नयेस्वाहा, ओं
भूःस्वाहा, ओंभुवःस्वाहा, ओंस्वःस्वाहा, ओंभूर्भु-
वःस्वःस्वाहा, ओंभूःस्वाहा, ओंभुवःस्वाहा, ओंस्वः-
स्वाहा, ओंमहःस्वाहा, ओंजनःस्वाहा, ओंतपःस्वा-
हा, ओंसत्यंस्वाहा" ॥ "ओंअग्नयेस्वाहेत्यग्निः सर्वदे-
वताः सौख्यं करोत्यसौ वा अग्निः प्रीणाति, "ओं
भूःस्वाहेति" भूमिं वै उर्वन्तरिक्षमुर्वादींस्तेन प्री-
णाति, "ओंभुवःस्वाहेति" भुवनानां पतय इत्युद्-
भुतं तेन प्रीणाति, "ओंस्वःस्वाहेति" आप एष इमं

लोकं जयतु तेन सोमपः प्रीणाति, "ओंभूर्भुवः-स्वःस्वाहेति" अग्निं सूर्यं ज्योतिष्मन्तं करोति यजमानो वृध्यते। "ओंभूःस्वाहेति" भूमिर्वै द्विपदाश्चैव चतुष्पदस्तेन वृध्यंते, "ओंभुवःस्वाहेति" अन्तरिक्षं वै वायुर्देवता तेन वायून्वै प्रीणाति, "ओंस्वःस्वाहेति" वाचो मे प्राणापानौ सम्राट् चक्षुषस्तेन प्रीणाति, "ओंमहःस्वाहेति" महामनसां महालोकाञ्जयति होतारं तेन प्रीणाति, "ओंजनःस्वाहेति" जनानां जनपतिर्जन्तूनामिमं लोकं तेन प्रीणाति, "ओंतपःस्वाहेति" तपो वाऽसावादित्यो द्वादशमासाः संवत्सरं तेन प्रीणाति, "ओंसत्यंस्वाहेति" सत्यमिति वरुणचन्द्रमसौ नक्षत्राणि सप्तार्णवांस्तेन प्रीणाति, अथोत्तरस्मै सर्वा देवतास्तेन प्रीणाति, तेन सौख्यं करोति, यजमानो वृध्यते, सन्तत्यै प्रजावत्या भवति, अवि-

च्छिन्नं प्रदीयते य एवं वेद ॥ इति व्याहृतिब्राह्मणम् ॥
मध्याह्ने वृषवाहना त्रिनयना शुक्लाम्बरालेपना खट्वाङ्गं
त्रिशिखं कपालडमरू दोर्भिर्वहन्ती सदा । शुक्ला
शुक्लविभूषणा नरशिरोमालाभिरावेष्टिता भूयाद्यौवन-
वत्यसौ त्रिजगतां सर्वार्तिविद्राविणी ॥ ओंतत्स-
वितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो
नः प्रचोदयात् ३ ॥ "ओंतत्सवितुरिति" तदा-
दित्यः सविता प्रसविता प्रजया पशुषु प्रतिति-
ष्ठति, "वरेण्य"मित्यऽग्निर्वै वरिवः कृणोति, "भ-
र्गोति" रश्मयः शतं सहस्रमऽयुतं च प्रतनो-
ति, "देवस्य" द्योतनपरमं कामस्य, "धीम-
हीति" धीमान् विश्वस्याप्नोति, "धियोयोन"
इति अहोरात्रिः सन्ध्यामुपयन्ति, "प्रचोदयादि-
ति" प्रजापतिर्वा प्रजामुपसृजति, पशुषु प्रति-

तिष्ठति, तस्माद्गायत्री चतुर्विंशत्यक्षरा भवति, सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै न ब्रह्मचारिणं शतं सहस्रमयुतं च प्रजावान्पशुमान्ब्रह्मवर्चस्व्यायुष्मन्तं करोति, तस्माद्गायत्री आयुरिव परमं कामं गायत्र्याऽभितिष्ठति य एवं वेद ॥

इति तत्सवितुर्ब्राह्मणम् ॥ चतुर्भुजामर्कसहस्रकोटिभां त्रिलोचनां हारकिरीटशोभिताम् । चतुर्मुखस्याङ्कगतां महोज्ज्वलां वेदेश्वरीं पञ्चमुखीं नमाम्यऽहम् ॥ "ॐ ओजोऽसि सहोऽसि बलमसि भ्राजोऽसि देवानान्धामनामासि विश्वमसि विश्वायुः सर्वमसि सर्वायुरभिभूः" ॥ ॐ देवाश्चवा असुराश्च संय्यत्ता आसस्तान्गायत्र्यऽन्तराऽतिष्ठदोजो वै वीर्यमन्नाद्यं परिगृह्य संवत्सरो वा वैनान्सोऽन्तरातिष्ठच्चतुर्विंशति गायत्र्या अक्षराणि, चतुर्विंशति संवत्सरस्यार्धमासा-

स्ते विदुर्यतरान्वा इयमुपवत्स्यतिं, त इदं भवि-
ष्यंति तं व्यह्वयंस्तदाभीत्यऽसुरा आह्वयन्विश्वकर्म-
न्निति देवा अस्मान्यतरांश्च नोपवर्तत, ते देवा ए-
तद्यजुरपश्यन् "ओजोसि सहोसि बलमसि भ्राजोसि
देवानान्धामनामासि विश्वमसि विश्वायुः सर्वमसि स-
र्वायुरभिभूरिति" स देवानुपावर्तत, ततो देवा अ-
भवन् परासुरा अभवन्नाग्नेय्यमऽष्टाकपालं निर्वपेद्भ्रा-
तृव्यवान्वा स्पर्धमानो वा तमाऽसाद्यैतैर्यजुरभिमृ-
शेदोजो वै वीर्यं संवत्सर ओज एव वीर्यं भ्रातृ-
व्यस्य वृंक्ते, सनिर्वीर्यः पराभवति, सैषा गायत्री
नामेष्टिरथो आहुः क्षेत्रस्य संवर्ग इति ॥ इति ओ-
जोसिब्राह्मणम् ॥ ब्राह्मी हंसरथस्थिता मुखसरोजा-
श्चतुर्वाङ्मयी मुद्रापुस्तककुण्डलाक्षवलयाधारा च-
तुर्भिर्भुजैः । रक्ता रक्तविभूषणा प्रहसिता रक्ताम्ब-

रालङ्कृता कौमारी मम जीवितावधि सदा भूयादघध्वंसिनी ॥ "अश्वमेधे घोराणामारम्भम् । द्रष्ट्रेनम उपद्रष्ट्रे नमोऽनुद्रष्ट्रे नमः ख्यात्रेनम उपख्यात्रे नमोऽनुख्यात्रे नमः शृण्वते नम उपशृण्वते नमः सते नमोऽसते नमो जाताय नमो जनिष्यमानाय नमो भूताय नमो भविष्यते नमश्चक्षुषे नमः श्रोत्राय नमो मनसे नमो वाचे नमो ब्रह्मणे नमः शान्ताय नमस्तपसे नमः ॥ भूतं भव्यं भविष्यद्वषट्स्वाहा नम, ऋक्सामयजुर्वषट्स्वाहा नमो गायत्री त्रिष्टुब्जगती वषट्स्वाहा नमः पृथिव्यन्तरिक्षं द्यौर्वषट्स्वाहा नमोऽन्नं कृषिर्वृष्टिर्वषट्स्वाहा नमः पिता पुत्रः पौत्रो वषट्स्वाहा नमः प्राणो व्यानोऽपानो वषट्स्वाहा नमो भूर्भुवःस्वर्वषट्स्वाहा नमः" ॥ "द्रष्ट्रेनम उपद्रष्ट्रेनमोऽनुद्रष्ट्रेनम" इत्यऽग्निर्वै

द्रष्टा ब्रह्मा उपद्रष्टा वायुरनुद्रष्टा तेभ्य एव नमस्करोति, "ख्यात्रेनम उपख्यात्रेनमोऽनुख्यात्रे नम" इति संवत्सरो वै ख्याताऽदित्य उपख्याता चन्द्रमाऽनुख्याता तेभ्य एव नमस्करोति, "शृण्वतेनम उपशृण्वतेनम" इति द्यावापृथिवीभ्यामेव नमस्करोति, "सतेनमोऽसतेनम" इति सदसद्भ्यामेव नमस्करोति, "ज्ञातायनमो जनिष्यमाणाय नम" इति यज्ञाय वै दक्षिणायै च नमस्करोति, "भूतायनमो भविष्यतेनम" इति ऋक्सामभ्यामेव नमस्करोति, "चक्षुषेनमः श्रोत्रायनम" इति यथा यजुरेकविंशतिकृत्वो नमस्करोति, पञ्चर्तवो द्वादश मासास्त्रय इमे लोका आसावादित्य एकविंश एष स्वर्गो लोकः स्वर्गस्य लोकस्य समष्ट्यै सर्वा वा एतर्ह्येतास्मिन्देवता आशंसन्ती सामाभिव्याहरिष्यन्तीत्यग्निः सर्वा

देवता असावादित्योऽग्निर्यदेतैर्नमस्कारैरादित्यमुपतिष्ठते, सर्वाभिरेवैनं देवताभिः समर्धयत्यश्वं वट्कारं ये ते पन्थानः सविता पूर्व्यास इति वितता अन्तरिक्षे तेभिर्नो अद्य पथिभिः सुगेभिरक्षा च नो अधि च ब्रूहि देव इति स्वर्गस्य लोकस्य समष्ट्यै नमोऽग्नये पृथिवीक्षित इत्यग्निनाऽयतनेषु निदधातीमानेवैनांल्लोकानुगमयति य एवं वेद ॥ इति द्रष्टृब्राह्मणम् ॥ ओं यस्या भूः पाददेशे वसति तदुपरि खं गुदे स्वर्गलोको नाभौ मध्ये महाख्यो जन उरसि गतः कण्ठगामी तपश्च। सत्यं मूर्ध्नीश्वराख्या त्रिगुणविरहिता निष्कला स्वस्वरूपा सा देवी विश्वरूपा वितरतु विभवं वेदमूला पराख्या ॥ "यो विश्वचक्षुरुत विश्वतो मुखो विश्वतो हस्त उत विश्वतस्पात्। सम्बाहुभ्यां नमते संयजत्रैर्द्यावापृथिवी

जनयन्देव एकः ॥" "यो विश्वचक्षुरुत"इति विश्वचक्षुर्वै देवानां भवति, "विश्वतो मुख"इति विश्वमुखां दर्शयति, "विश्वतो हस्त"इति विश्वहस्त उत्तमा भवति, "उत विश्वतस्पात्" इति विश्वतस्पाद्धार. "सम्बाहुभ्यामिति" सर्वबाहुर्वै, नमते नमस्कुर्याः कुर्व-न्ते, "संयजत्रैरिति"सर्वस्य जित्यै, "द्यावापृथिवी" इति द्यावापृथिव्योर्धारयते, "जनयन्देव एक"इति जनमिति जनानां जनपतेर्जन्तूनामात्मा वै सर्वा-न्ध्यायन्ते देव एको भवति स देवः सर्वेभ्यो रक्षां-सि भवति य एवं वेद ॥ इति यो विश्वब्राह्मणम् ॥

प्रातःकाले कुमारी कुमुदकलिकया जप्यमालां जप-न्ती मध्याह्ने प्रौढरूपा विकसितवदना चारुनेत्रा विशाला । सन्ध्यायां वृद्धरूपा गलितकुचयुगे मुण्ड-मालां वहन्ती सा देवी दिव्यदेहा हरिहरनमिता पातु

नो ह्यादिमुद्रा ॥ ओं३आ ब्रह्मन्ब्राह्मणो ब्रह्मवर्चस्वी जायतामास्मिन्राष्ट्रे राजन्य इषव्यः शूरो महारथो जायतां दोग्ध्री धेनुर्वोढाऽनड्वानाशुः सप्तिर्जिष्णू रथेष्ठाः पुरन्धिर्योषा सभेयो युवाऽस्य यजमानस्य वीरो जायतां निकामे निकामे नः पर्जन्यो वर्षतु फलवत्यो न ओषधयः पच्यन्तां योगक्षेमो नः कल्पताम् ॥ "आ ब्रह्मन्ब्राह्मणो ब्रह्मवर्चस्वी जायता"मित्याह, ब्राह्मण एव ब्रह्मवर्चसं दधाति, तस्मात्पुरा ब्राह्मणो ब्रह्मवर्चस्वी जायताम्, "अस्मिन्राष्ट्रे राजन्य इषव्यः शूरो" इति इषव्योऽतिव्यते, महारथो जायतामिति राजन्य एव शौर्यं महिमानं दधाति, तस्मात्पुरा राजन्यः शूर इषव्योऽतिव्यते महारथो जज्ञे, दोग्ध्री धेनुरिति धेन्वामेव पयोदधाति, तस्मात्पुरा धेनुर्दोग्ध्री जज्ञे, वोढाऽनु-

ड्वानिति अनुडुह्येव बलं दधाति, तस्मात्पुराऽनुड्वा-
न्वोढा जज्ञे, आशुः सप्तिरिति अश्व एव बलं द-
धाति, तस्मात्पुराऽऽशुरश्वोऽजायत, "पुरन्धिर्योषेति"
योषित्येव ज्योतिरिव रूपं दधाति, तस्माद्रूपिणी ज्यो-
तिः प्रिया भावुका, "जिष्णू रथेष्ठा" इति राजन्य एव
जैत्रं महिमानं दधाति, तस्मात्पुरा राजन्यो जिष्णुर्जज्ञे,
"सभेयो" युवेति एष वै सभेयो युवा यः प्रथमवयसि
तस्मात्प्रथमवयसि स्त्रीणां प्रियो युवा पुमान्भावुकः,
"अस्य यजमानस्य वीरो जायता" मित्याह वै तत्र य-
जमानस्यैव प्रजायां वीर्यं दधाति, तस्मात्पुरा राजन्य-
स्य वीरो जज्ञे, "निकामे निकामे नः पर्जन्यो वर्षतु"
इति निकामे निकामो वै तत्र पर्जन्यो वर्षति यत्र-
तेन यज्ञेन यजन्ते, "फलवत्यो न ओषधयः पच्य-
न्ता" मिति फलवत्यो वै तत्रौषधयः पच्यन्ते यत्रैते-

न यज्ञेन यजन्ते, योगक्षेमो नः कल्पतामिति यो-
गक्षेमो वै तत्र कल्प्यते यत्रैतेन यज्ञेन यजन्ते,
तस्माद्यत्रैतेन यज्ञेन यजन्ते क्लृप्तप्रजानां योगक्षे-
मो भवति य एवं वेद ॥ श्रीमहागायत्र्यै स्वाहा,
सावित्र्यै स्वाहा, सरस्वत्यै स्वाहा ॥ अनेन मन्त्रहो-
मेन आत्मनो० श्रीमहागायत्रीदेवी सन्तोषणार्थं महागाय-
त्री सावित्री सरस्वती सव्याहृतिः प्रीयतां प्रीताऽस्तु ॥

## ॥ अथ कूष्माण्डार्षम् ॥

ब्रह्मा स्वयम्भूर्लिङ्गोक्ता देवताः समिधादानं पा-
प्मापहं च यद्देवा देवहेळनमित्यष्टौ आद्याश्चतस्रोऽनु-
ष्टुभः, पञ्चम्यष्टम्यौ त्रिष्टुभौ षष्ठसप्तम्यौ जगत्यौ ॥
यददीव्यन्निति सप्तोनाष्टौ त्रिष्टुप् महान्त्या प्रस्ता-
रपङ्क्तिः, षष्ठी गायत्री दशम्यनुष्टुबुपान्त्याद्व्युष्णि-
क् ॥ आयुस्ते विश्वतो दधदिति सप्तोनाद्या द्विपद्

सप्तम्यास्त्रिष्टुप् तृतीयाद्यास्तिस्रो गायत्रं पञ्चाष्टम्याद्यानुष्टुप् शक्कर्यन्तम् । सौत्रामण्या निचाङ्कुणस्य । यद्देवा देवहेळनमिति तिसृभिरनुष्टुप् । भद्रं कर्णेभिरिति चतसृभिः शिशुशैशवयोः । आद्यान्ते त्रिष्टुप् द्वितीया विराट् तृतीया जगती । "शेषः कोकिलस्य राजपुत्रस्य राज्येप्सोः । पुनन्तु मा पितर इति" नवभिः चतुर्थी चाद्या द्वेऽनुष्टुभौ त्रिष्टुबन्त्या वैश्वदेवी, शेषं गायत्रं तृतीया पञ्चम्याद्याश्चतस्रो गायत्रं । "ब्रह्मणो यश्चानिरुक्तम्" पुनर्मैत्विन्द्रियमिति तिसृभिरनुष्टुबष्टरूपा प्रस्तारपङ्क्तिः अपां यो द्रवण इति चतस्रः प्रजापतेस्त्रिष्टुप् । "हिरण्यवर्णा" इति तिसृभिः । कश्यपस्य त्रिष्टुप् जगत्यस्य । अग्ने त्वं पारयेतित्रयोदश स्वयम्भूर्ब्रह्मा लिङ्गोक्ताद्यास्तिस्रः षष्ट्यादि तिस्रस्त्रिष्टुबेकादशी च

चतुर्थ्यादि द्वात्रनुष्टुब्नवमी जगती पङ्क्तिर्द्विशक्कर्यन्तम् ॥ अथ कूष्माण्डैर्जुहुयाद्योऽपूत इव मन्येत यथा वै भ्रूणहैव सैष भवति योऽयोनौ रेतः सिञ्चति यदर्वाचीनमेनो भ्रूणहत्यायास्तस्मान्मुचेयमित्यऽयोनौ रेतः सिक्त्वा स्वप्नादन्यत्र भ्रूणहत्याया ब्रह्महत्याया वा पवित्रकामः पौर्णमास्याममावस्यायां वा केशश्मश्रुलोमनखानि वापयित्वा शुद्धपक्षस्य पुण्याहे पर्वणि रोहिण्यां वा स्नातः शुचिः शुचिवासाः कृष्णाजिनवासा वा ब्रह्मचारिकल्पेन व्रतमुपैति, संवत्सरं मासं चतुर्विंशति द्वादश षट् तिस्रो वा रात्रीः, न मांसमश्नीयात् न स्त्रियमुपेयात् नोपरि शयीत जुगुप्सेतानृतात् पयो भक्षयति इति प्रधानकल्पः। यावकमुपभुञ्जीत कृच्छ्रं द्वादशरात्रं वाऽचरेत्, यवागूं राजन्यस्यामिक्षां वैश्यस्य सौम्ये-

ऽप्यध्वर इत्येतद्व्रतं ब्रूयात् यदि मन्येतोपदास्यामी-
त्येवमोदनं धाना सक्तून् घृतमित्यनुव्रतयेदात्मनो-
ऽनुपदासायेति पूर्वाह्णेऽग्निमुपसमाधाय चरुं श्रपयि-
त्वाऽऽग्नेयाद्याः षट् देवताः कलशेऽभ्यर्च्य निर्वपेत् ।
आज्यभागान्तं हुत्वाऽथ स्रुवेणाज्यस्य जुहोति । य-
द्देवा देवहेळनं, यददीव्यनृणमहं, आयुस्ते विश्वतो
दधदित्येतैः सूक्तैः प्रत्यृचमाज्यं जुहुयात् । यद्देवा
देवहेळनमिति तिसृभिः । भद्रं कर्णेभिरिति चतसृ-
भिः । पुनन्तु मा पितर इति नवभिः, पुनर्मामैत्वि-
न्द्रियमिति तिसृभिः । रथे अक्षेष्विति चतसृभिः ।
हिरण्यवर्णा इति तिसृभिः प्रतिमन्त्रमाज्यस्य हुत्वा
अथ व्रतहोमान् जुहोति । "अग्नये वायवे सूर्याय
ब्रह्मणे प्रजापतये कूष्मर्षिभ्य" इति व्रतहोमः । "अग्ने
त्वं पारयेति स्विष्टकृतम् । वैश्वानर्येणेति सूक्तेन प्राङ्

मुखः प्राञ्जलिरुपतिष्ठते, जपेत्सूक्तानि पराश्चि यानि वैश्वानरीयं च । एवमोदनमासाद्याग्न्याधेये दशहोता दर्शपौर्णमासयोश्चतुर्होता चातुर्मास्येषु पञ्चहोता पशुयज्ञे षड्होता सोमे सप्तहोतेति ह विज्ञायते कर्मादिष्वेतैर्जुहुयात्पूतो देवलोकं समश्नुत इत्येतदित्येतत् ॥ इति कूष्माण्डार्षम् ॥

## अथ कूष्माण्डम् ॥

अस्य श्रीकूष्माण्डमन्त्रस्य ब्रह्मा ऋषिः, गायत्रंच्छन्दः श्रीकूष्माण्डो देवता, आत्मनो० अहोरात्रकृतदशविधपापनिष्कृत्यर्थं पाठे होमे वा विनियोगः ॥ ध्यानम्

कूष्मा नाम मुनीश्वरास्त्रिभुवने ख्याताः सुरूपाः शुभा
अण्डानाममृतेश्वरा विचरतां मध्ये स्वहंसात्मकाः।
तेऽपि यत्पठनात्परात्परतरां श्रेष्ठां गतिमास्थिताः
सोयं नो विदधातु सौख्यनिचयं पापारिनाशं सदा ।१।

यत्पाठात्प्रलयं प्रयान्ति शतशः पापारिसंघाः क्षणा-
द्धोमात्तर्पणसञ्चयात्सुमहतामभ्यासनात्सद्वरात् । सोयं
ब्रह्ममुखोद्भूतः परतरो मन्त्रादिगर्भो महान् कूष्माण्डो
विदधातु सौख्यनिचयमग्नेः पुरःसंस्थितिम् ॥ २ ॥

कूष्माण्डानि कूष्माणां शकुनीनामण्डस्थानाम् ॥

यद्देवा देवहेळनं यद्वाचानृतमूदिम । आदित्यास्त-
स्मान्मुञ्चतर्तस्यर्तेन मामुत ॥ १ ॥ देवा जीवनका-
म्या यद्वाचानृतमूदिम । तस्मान्न इह मुञ्चत वि-
श्वेदेवाः सजोषसः ॥ २ ॥ ऋतेन द्यावापृथिवी ऋ-
तेन त्वं सरस्वति । कृतान्नः पाह्येनसो यत्किञ्चा-
नृतमूदिम ॥ ३ ॥ इन्द्राग्नी मित्रावरुणौ सोमो
धाता बृहस्पतिः । ते नो मुञ्चन्त्वेनसो यत्किञ्चा-
नृतमूदिम ॥ ४ ॥ सजातशंसादुत जामिशंसाज्ज्या-
यसः शंसादुत वा कनीयसः । अनाधृष्टं देवकृतं

यदेनस्तस्मात्त्वमस्माज्जातवेदो मुमुग्धि ॥ ५ ॥ यदन्तरिक्षं पृथिवीमुत द्यां यत्पितरं मातरं वा जिहिंसिम । अग्निर्नस्तस्मादेनसो गार्हपत्यः प्रमुञ्चतु चकृम यानि दुष्कृता ॥ ६ ॥ येन त्रितो अर्णवान्निर्बभूव येन सूर्यस्तमसो निर्मुमोच । येनेन्द्रो विश्वा अजहादरातींस्तेनाहं ज्योतिषां ज्योतिरानशान आक्षि ॥ ७ ॥ यत्कुसीदमप्रतीतं मयीह येन यमस्य मिथुना चरामि । एतत्तदग्ने अनृणो भवामि जीवन्नेव प्रति तत्ते दधामि ॥ ८ ॥ यद्दीव्यन्नृणमहं बभूवा दित्सन्वासञ्जगरञ्जनेभ्यः । अग्निर्मा तस्मादिन्द्रश्च संविदानौ प्रमुञ्चताम् ॥ ९ ॥ यद्धस्ताभ्यां चकर किल्विषाण्यक्षाणां वग्नुमुपजिघ्रमाणः । उग्रपश्या च राष्ट्रभृच्च तान्यप्सरस अनुदत्तामृणानि ॥ १० ॥ उग्रंपश्ये राष्ट्रभृत्किल्विषाणि यदक्षवृत्तमनुदत्तमेत-

त् । नेन्न ऋणादृणावा इच्छमानो यमस्य लोके अधिरज्जुरायत् ॥ ११ ॥ अव ते हेळो वरुण नमोभिरवयज्ञेभिरीमहे हविर्भिः । क्षयन्नस्मभ्यमसुर प्रचेता राजन्नेनांसि शिश्रथः कृतानि ॥ १२ ॥ उदुत्तमं वरुण पाशमस्मदवाधमं विमध्यमं श्रथाय । अथा वयमादित्यव्रते तवानागसो अदितये स्याम १३ इमं मे वरुण श्रुधी हवमद्या च मृळय । त्वामवस्युराचके ॥ १४ ॥ तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः । अहेळमानो वरुणेह बोध्युरुशंसमान आयुः प्रमोषीः ॥ १५ ॥ त्वं नो अग्ने वरुणस्य विद्वान्देवस्य हेळोऽवयासिसीष्ठाः । यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषांसि प्रमुमुग्ध्यस्मत् ॥ १६ ॥ स त्वन्नो अग्नेऽवमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ अव य-

त्त्व नो वरुणं रराणो वीहि मृळीकं सुहवो न एधि ॥ १७ ॥ सङ्कसुको विकसुको निर्ऋथो यश्च निःस्वरः । तेऽस्मद्यक्ष्ममनागसो दूराद्दूरमचीचतन् ॥ १८ ॥ निर्यक्ष्ममचीचतन् कृत्यां निर्ऋतिं च । तेनान्योऽस्मत्समृच्छतां तमस्मै प्रसुवामसि ॥ १९ ॥ दुःशंसानुशंसाभ्यां घनेनानुघनेन च । तेन योऽन्यो-ऽस्मत्समृच्छतां तमस्मै प्रसुवामसि ॥ २० ॥ संव-र्चसा पयसा सन्तनूभिरगन्महि मनसा संशिवेन । त्वष्टा सुदत्रो विदधातु रायो नोऽनु मार्ष्टु तन्वो यद्विलिष्टम् ॥ २१ ॥ आयुस्ते विश्वतो दधदयम-ग्निर्वरेण्यः । पुनस्ते प्राण आयातु परायक्ष्मं सुवा-मि ते ॥ २२ ॥ इममग्न आयुषे वर्चसे कृधि ति-ग्ममोजो वरुण संशिशाधि । मातेवास्मा अदिते शर्म यच्छ विश्वेदेवा जरदष्टिर्यथासत् ॥ २३ ॥ अग्न

आयूंषि पवस आसुवोर्जमिषं च नः । आरे बाधस्व दुच्छुनाम् ॥ अग्निर्ऋषिः पवमान पाञ्चजन्यः पुरोहितः । तमीमहे महागयम् ॥ २५ ॥ अग्ने पवस्व स्वपा अस्मे वर्चः सुवीर्यम् । दधद्रयिं मयि पोषम् ॥ २६ ॥ अग्ने जातान्प्रणुदानः सपत्नान्प्रत्यजाताञ्जातवेदो नुदस्व । अधि नो ब्रूहि सुमना अहेळञ्शर्म ते स्याम त्रिवरूथ उद्भौ ॥ २७ ॥ सहसा जातान्प्रणुदानः सपत्नान्प्रत्यजाताञ्जातवेदो नुदस्व । अधि नो ब्रूहि सुमनस्यमानो वयं स्याम प्रणुदानः सपत्नान् ॥ २८ ॥ अग्नेयो नोऽभितो वृको जनो वारो जिघांसति । तं त्वं वृत्रहञ्जहि वस्वस्मभ्यमाकृधि ॥ २९ ॥ अग्नेयो नोऽभिदासति समानो यश्च नेष्ठ्यः । तं वयं समिधं कृत्वा तुभ्यमग्नेऽपिदध्मसि ॥ ३० ॥ यो नः शपादशा-

पतो यश्च नः शपतः शपात् । इध्मस्येव प्रक्ष्या-
यतस्तस्य मुञ्चेषि किञ्चन ॥ ३१ ॥ संशितं मे
ब्रह्म संशितं वीर्यं बलम् । संशितं क्षत्रं मे जिष्णु
यस्याहमस्मि पुरोहितः ॥ ३२ ॥ उदेषां बाहू अ-
तिरमुद्वर्चो अथो बलम् । क्षणोमि ब्रह्मणा मित्रा-
नुन्नयामि स्वाँनहम् ॥ ३३ ॥ पुनर्मनः पुनरायुर्म
आगात्पुनश्चित्तं पुनराधीतं म आगात् । पुनश्चक्षुः
पुनःश्रोत्रं म आगात् । वैश्वानरो अदब्धस्तनूपा
अवबाधतां दुरितानि विश्वा ॥ ३४ ॥ "सौत्रामण्या
निचाङ्कुणस्य" यद्देवा देवहेळनं देवासश्चकृमा वयम् ।
अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्वंहसः ॥ ३५ ॥
यदि दिवा यदि नक्तमेनांसि चकृमा वयम् । वायु-
र्मा तस्मादेनसो विश्वान्मुञ्चत्वंहसः ॥ ३६ ॥ यदि
जाग्रद्यदि स्वप्नमेनांसि चकृमा वयम् । सूर्यो मा

तस्मादेनसो विश्वान्मुञ्चत्वंहसः ॥ ३७ ॥ "प्रायश्चित्तानि सर्वान्तीयानि शिशुशैशवयोः" भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः । स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितं यदायुः ॥ ३८ ॥ स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः । स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥ ३९ ॥ पृषदश्वा मारुतः पृश्निमातरः शुभं युवानो विदथेषु जग्मयः । अग्निजिह्वा मनवः सूरचक्षसो विश्वे नो देवा अवसाऽगमन्निह ॥ ४० ॥ शतमिन्नु शरदो अन्ति देवा यत्रा नश्चक्रा जरसं तनूनाम् । पुत्रासो यत्र पितरो भवन्ति मा नो मध्या रीरिषतायुर्गन्तोः ॥ ४१ ॥ "शेषः कोकिलस्य राजपुत्रस्य राज्यप्सोः" पुनन्तु मा पितरः सोम्यासः पुनन्तु मा पितामहाः । पुनन्तु

प्रपितामहाः पवित्रेण शतायुषा ॥ ४२ ॥ पुनन्तु मा पितामहाः पुनन्तु प्रपितामहाः । पवित्रेण शतायुषा विश्वमायुर्व्यश्नवै ॥ ४३ ॥ अग्न आयूंषि पवस आसुवोर्जमिषं च नः । आरे बाधस्व दुच्छुनाम् ॥ ४४ ॥ पुनन्तु मां देवजनाः पुनन्तु मनसा धियः । पुनन्तु विश्वाभूतानि जातवेदः पुनीहि मा ॥ ४५ ॥ पवित्रेण पुनीहि मा शुक्रेण देवदीद्यत् । अग्ने क्रत्वा क्रतूँरनु ॥ ४६ ॥ यत्ते पवित्रमर्चिष्यग्ने विततमन्तरा । ब्रह्म तेन पुनातु मा ॥ ४७ ॥ पवमानः सोऽअद्य नः पवित्रेण विचर्षणिः । यः पोता स पुनातु मा ॥ ४८ ॥ उभाभ्यां देव सवितः पवित्रेण सवेन च । मां पुनीहि विश्वतः ।४९ वैश्वदेवी पुनती देव्यागाद्यस्यामिमास्तन्वो वीतपृष्ठाः । तया मदन्तः सधमादेषु वयं स्याम

पतयो रयीणाम् ॥ ५० ॥ "ब्राह्मणो यच्चानिरुक्तम्" पुनर्मा मैत्विन्द्रियं पुनरायुः पुनर्भगः । पुनर्ब्रह्म-णमैतु मा पुनर्द्रविणमैतु माम् ॥ ५१ ॥ यन्मे-ऽद्य रेतः पृथिवीमस्कन्यदोषधीरप्यसरद्यदपः । तद-हं पुनराददे ॥ ५२ ॥ यन्मे रेतः प्रसिच्यते यन्म आजायते पुनः । यद्वा मे प्रतितिष्ठति तेन माम-मृतं कुरु तेन सुप्रजसं कुरु ॥ ५३ ॥ "अपां यो द्रविण इति प्रजापतेः" ॥ रथे अक्षेषु वृषभस्य वाजे वाते पर्जन्ये वरुणस्य शुष्मे । इन्द्रं या देवी सुभ-गा जजाना सेयमगाद्वर्चसा संविधाना ॥ ५४ ॥ या हस्तिनि द्वीपिनि या हिरण्ये गोष्वऽश्वेषु पुरु-षेष्वन्तः । इन्द्रं या० ॥ ५५ ॥ सिंहे व्याघ्र उत या पृदाकौ त्विषिरग्नौ ब्राह्मणे सूर्ये या । इन्द्रं या देवी० ॥ ५६ ॥ या राजन्ये दुन्दुभावायतायाम-

श्वस्य क्रन्दे पुरुषस्य मायौ । इन्द्रं य० ॥ ५७ ॥ "हिरण्यवर्णा इति कश्यपस्य" हिरण्यवर्णाः शुचयः पावका यासु जातः कश्यपो यास्विन्द्रः । या अग्निं गर्भं दधिरे विरूपास्ता न आपः शंस्योना भवन्तु ॥ ५८ ॥ यासां देवा दिवि कृण्वन्ति भक्ष्यं या अन्तरिक्षे बहुधा भवन्ति । या अग्निं० ॥ ५९ ॥ यासां राजा वरुणो याति मध्ये सत्यानृते अवपश्यञ्जनानाम् । या अग्निं० ॥ ६० ॥ "कूष्माण्डब्राह्मणं च हुत्वा" तेजोसि । ॐ अग्नयेनमः, वायवे नमः, सूर्यायनमः, ब्रह्मणेनमः, प्रजापतयेनमः, कूष्मर्षिभ्यःनमः, "इति व्रतहोमः" "अग्ने त्वं पारयेति स्विष्टकृतम्" ॥ अग्ने त्वं पारयानव्यो अस्मान्स्वस्तिभिरतिदुर्गाणि विश्वा । पूंश्च पृथ्वी बहुलान उर्वी भवा तोकाय तनयाय शंय्योः ॥ ६१ ॥

"वैश्वानरेण सूक्तेन प्राङ्मुखः प्राञ्जलिरुपतिष्ठते, जपेत्सूक्तानि पराञ्चि यानि वैश्वानरीयं च" वैश्वानराय प्रति वेदयामो यदी मृळं सङ्गर देवतासु । स एतान्पाशान्प्रमुञ्च प्रवेद सनो मुञ्चतु दुरितादवद्यात् ॥ ६२ ॥ वैश्वानरः पावयानः पवित्रैर्यत्सङ्गरमभिधावाम्याशाम् । अनाजानन्मनसा याचमानो यदत्रैनो अपतत्सुवामि ॥ ६३ ॥ अमू ये सुभगे दिवि विचृतौ नाम तारके । प्रेहामृतस्य यच्छतमेतद्बद्धकमोचनम् ॥ ६४ ॥ विजिहीष्व लोकान्कृधि बन्धान्मुञ्चासि बद्धकम् । योनेरिव प्रच्युतो गर्भः सर्वान्पथो अनुष्यात् ॥ ६५ ॥ सुप्रजानन्प्रतिगृह्णाति विद्वान्प्रजापतिः प्रथमजा ऋतस्य । अस्माभिर्दत्तं जरसः परस्तादच्छिन्नं तन्तुमनु सन्तरेम ॥ ६६ ॥ उत तन्तुमन्वेके सन्तरान्ति येषां दत्तं

पित्र्यमायतनवत् ॥ अबन्ध्वेके ददतः प्रयच्छन्दातुं
चेच्छक्नुवान्स स्वर्ग एषाम् ॥ ६७ ॥ आरभेथा-
मऽनु संरभेथां समानं पन्थामवतो घृतेन । यद्वां
पूर्तं परिविष्टं यदग्नौ तस्य गुप्त्या इह जायापती
संरभेथाम् ॥ ६८ ॥ यदन्तरिक्षं पृथिवीमुत द्यां
यत्पितरं मातरं वा जिहिंसिम। अग्निर्नस्तस्मादेनसो
औपासन उन्नैनेषद्दुरिता यानि चकृम ॥ ६९ ॥
भूमिर्मातादितिर्नो जनित्रं त्रातान्तरिक्षमभिशस्त्या
नः । द्यौर्नः पिता पित्र्याच्छं भवाति जामिमृत्वा
मावपात्सि लोकान् ॥ ७० ॥ यत्रासुहार्दः सुकृतो
मदन्ति विहाय रोगं तन्वं स्वाम् । अश्रोणा अङ्गै-
रह्रुताः स्वर्गलोके तत्र पश्येम पितरं च पुत्रम्
॥ ७१ ॥ यदन्नमद्म्यऽनृतेन देवा दास्यन्नदास्य-
न्नुत वा करिष्यन् । यद्देवानां चक्षुष्या गो असि

यदेव किञ्च प्रतिजग्राहाहमग्निर्मा तस्मादऽनृणं करोतु ॥ ७२ ॥ यदन्नमद्मि बहुधा विरूपं वासो हिरण्यमुत गामजामविम् । यद्देवानां चक्षुष्या गो अस्ति यदेव किञ्च प्रतिजग्राहाहमग्निर्मा तस्मादऽनृणं करोतु ॥ ७३ ॥ महापापापनुत्यर्थं कूष्माण्डानि जपेद्द्विजः । कृतव्रतः पौर्णमास्यां दर्शे वा प्रातरेवच ॥ १ ॥ पयो यवागूरामिक्षा द्विजादीनां व्रतं क्रमात् । नवां स्थालीं समाहृत्य तस्यां पायसमाश्रपेत् ॥ २ ॥ देवतास्तेन यष्टव्या ऋचो होम्या जपेत च । कूष्माण्डानि जपेन्नित्यं जुहुयाद्दर्शपूर्णयोः ॥ ३ ॥ पापी पापाद्विनिर्मुक्तः शुद्धात्मा स्वर्गमाप्नुयात् । प्रायश्चित्तानि हुत्वाथ द्विजाञ्छक्त्या प्रपूजयेत् ॥ ४ ॥ अनेन कूष्माण्डमन्त्रहोमेन "वा" पाठेन आत्मनो० अग्निः प्रीयतामग्निः प्रीतो·

स्तु, वायुः प्रीयतां वायुः प्रीतोऽस्तु, सूर्यः प्रीयतां सूर्यः प्रीतोऽस्तु, ब्रह्मा, प्रजापतिः कूष्मर्षयः प्रीयन्तां प्रीता सन्तु, पापान्मुक्तिः पुण्यवृद्धिरस्तु ॥ इति कूष्माण्डमन्त्राः ॥

## ॥ अथ कूष्माण्डब्राह्मणम् ॥

"ब्राह्मणः प्रजापतेर्यजुः" ॥ वातरशना ह वा ऋषयः श्रमिण ऊर्ध्वमन्थिनो बभूवुस्तानृषयोऽर्थमायन् ते निलायमाचरंस्तान्प्रददृशुः, कूष्माण्डानि तांस्तेऽन्वपश्यञ्छ्रद्धया च तपसा च तानृषयोऽपृच्छन् कथानिलायं चरथेति, त ऋषीनब्रुवन्नमो वोस्तु भगवन्तोऽस्मिन्धाम्नि केन वः सपर्यामेति तानृषयोऽब्रुवन् पवित्रं नो ब्रूत, येनाऽरेपसो भविष्याम इति । त एतानि सूक्तान्यपश्यन् "यद्देवा देवहेळनं । यददीव्यन्नृणमहं । आयुस्ते विश्वतो दधत्" इत्येतैराज्यं जुहुत, तेनऽरेपसो भविष्यथेति,

त एतैराज्यमजुहुवुस्ते वाऽरेपसोऽभवन्कर्मादिष्वेतै-र्जुहुयात्पूतो देवलोकान्समश्नुते १ कूष्मा ह वै नाम ऋषयो वातरशनास्त हंसा हिरण्मया ज्योतिष्पक्षा अजिराभूत्वाऽचरँस्तेऽकामयन्ताऽण्डेषु नः प्रजा ब्रह्म वदेयुरिति तेषामण्डेष्वेव प्रजा ब्रह्माऽवादिषुस्त अ-ण्डस्था अवदंस्तस्मात्कूष्माण्डानि कूष्माण्डैर्जुहु-यात् योऽपूत इव मन्येत यदर्वाचीनमेनो भ्रूणह-त्यायास्तस्मान्मुच्येयमित्ययोनौ वा रेतः सिक्त्वा जुहुयात् यथा वै स्तेनो यथा भ्रूणहैवमेष भवति योऽयोनौ रेतः सिञ्चति, यदेतैराज्यं जुहोति, तै-रेवाऽत्मानं पुनीते दीक्षामुपैति दीक्षित एतैः सदधि जुहोति संवत्सरं दीक्षितो भवति, संवत्सरादेवा-त्मानं पुनीते मासंदीक्षितो भवति यो वै मासः स संवत्सरः संवत्सरादेवात्मानं पुनीते, द्वादशरात्री-

दीक्षितो भवति द्वादशमासः संवत्सरः संवत्सरादेवात्मानं पुनीते, षड्रात्रीर्दीक्षितो भवति षड्वा ऋतवः संवत्सरः संवत्सरादेवात्मानं पुनीते । तस्य व्रतं "न मांसमश्नीयात्, न स्त्रियमुपेयात्, नोपर्यासीत, जुगुप्सेतानृतात्" पयो ब्राह्मणस्य व्रतं, यवागूराजन्यस्य, आमिक्षा वैश्यस्य, सौम्येप्यध्वरे इत्येतद्व्रतं ब्रूयात् यदि मन्येतोपदास्यामीत्योदनं धानाः सक्तून् घृतमित्यनुव्रतयेदात्मनोऽनुपसादायेति ॥ इति कूष्माण्डब्राह्मणम् ॥

## ॥ अथ पावमान्यब्राह्मणम् ॥

"वैश्वानरेणेति पावमान्यब्राह्मणेन चोपस्थानम्" ॥

"ॐ त्वं सोमासि द्वात्रिंशद्भारद्वाजः कश्यपो गोतमोऽत्रिर्विश्वामित्रो जमदग्निर्वसिष्ठ इतीह त्र्यृचाः सप्तर्षयः शेषं पवित्रो वसिष्ठो भावितारास्तस्मः पापाण्यो

यत्ते पवित्रमाग्नेयी साविन्यग्निः सावित्री वैश्वदेवी पवस्व सोमेति षोडशाक्षरास्तिस्रो द्विपदास्त्रिशी पुरा उष्णिक् सप्तविंशत्याऽनुष्टुबन्ते च ते पावमान्यंत्यस्तु ते जगती उपस्थाने विनियोगः" ॥

ओं त्वं सोमासि धारयुर्मन्द्र ओजिष्ठो अध्वरे । पवो सम हयद्रविः ॥ त्वं सदो नृपादने दधन्वात्सत्सरित्तमः । इन्द्राय सूरिरन्धसा ॥ त्वं सुष्वाणो अद्रिभिरभ्योऽकर्षत्कनिक्रदत् । द्युमन्तं शुष्ममुत्तमम् ॥ इन्दुं हिन्वानि आर्षति तिरो वाराण्यव्यया । हरिवाजमचिक्रदत् ॥ इन्दो व्यवमर्षसि विश्रवांसि त्रिसौभगः । विवाजान्सोमगो मतः ॥ १ ॥ आन इन्दो शतग्विनं रयिङ्गोमन्तमश्विनम् । भिरासोमसहस्त्रिणम् ॥ पावमानः स इन्दवः स्थिरः पवित्रमाशवः । इन्द्रं यासेभिराशत ॥ ककुहः सोम्यो

रस इन्दुरिन्द्राय पूर्व्यः । आशुः पवत आयवे ॥
हिन्वन्ति सूर सुस्रयः पवमानः मधुश्च्युतम् । अ-
भिगिरा समस्वरन् ॥ अविता नो अजाश्वः पूषा
यामनि वासनि । आभक्षत्कन्यासु नः ॥ २ ॥
अयं सोम कपर्दिनो घृतन्नः पवते शुचि । आ
भक्षत्कन्यासु नः ॥ वाचो जन्तुः कवीनां पव-
स्व सोम धारय । देवेषु रत्नधा असि ॥ आकल-
येषु धावति श्येनो वर्म विगाहते । अभिद्रोणा
कनिक्रदत् ॥ परि प्रसोमतेरसौरसलिकलशोऽसुतः ।
श्येनो न उक्तो आर्षति ॥ ३ ॥ पवस्व सोम
मन्दयन्निन्द्राय मधुमत्तमः । असृग्रन्देववीतये ॥
वाजयन्तो रथा इव ते सुतासो मदिन्तमाः । शु-
क्रावायुमसृक्षत ॥ ग्राव्णा तन्नो अभिष्टुतः पवित्रं
सोम गच्छसि । दधस्तोत्रे सुवीर्यम् ॥ एष तन्नो

अभिष्टुतः पवित्रमतिगाहते । रक्षोहावारमव्ययम् ॥ ४ ॥ यदन्ते यच्च दूरके भयं विन्दति मामिह । पावमानं वितज्जहि ॥ पावमानः सो अद्यनः पवित्रेण विचर्षणि । यः पूतः स पुनातु मा ॥ यत्ते पवित्रमर्चिष्यग्ने विततमन्तरः । ब्रह्मं स्तेन पुनीहि नः ॥ यत्ते पवित्रमग्निवदग्ने तेन पुनीहि नः । ब्रह्म स वै पुनीहि मा ॥ उभाभ्यां देव सवितः पवित्रेण सवेन च । मां पुनीहि विश्वतः ॥ ५ ॥

"इत्युपस्थाने पावमान्यब्राह्मणं समाप्तम् ॥

अथ तर्पणे पावमानीब्राह्मणम् ॥ अस्य पावमानीसूक्तस्य "गायत्रीच्छन्दः सप्तर्षयो देवता आत्मनो० तर्पणे विनियोगः" ओं त्रिभिष्ट्वन्देव सवितर्वसिष्ठैः सोमधामभिः । अग्ने दक्षैः पुनीहि मा ॥ "अनुष्टुप्छन्दः" । पुनन्तु मा देवजनाः पुनन्तु वसवो धिया । विश्वे देवाः

पुनीतमा जातवेदः पुनीहि मा । "द्वे गायत्रीच्छन्दः" ।
आप्ययस्व प्रस्यन्दस्व सोम विश्वेभिरंशुभिः । देवे-
भ्य उत्तमं हविः ॥ उपप्रियं परिपूतं च्युवानमाहु-
तीवृधम् । अगर्म विद्रुतो नमः । "उष्णिक्छन्दः" ।
अलाय्यस्य परशुना शतसा पर्वसु देवसाम । आ-
खुश्चिदेव सोम ॥ "द्वे अनुष्टुप्छन्दः" । यः पावमा-
नीरध्येत्यृषिभिः सम्भृतं रसम् । सर्वं स पूतमश्नाति
सुदितं मातरिश्वना ॥ पावमानीर्यो अध्येत्यृषिभिः
सम्भृतं रसम् । तस्मै सरस्वती दुहे क्षीरं सर्पिर्मधूदक-
म् ॥ पावमानीः स्वस्त्ययनीः सुदुघा हि घृतश्च्युतः ।
ऋषिभिः सम्भृतो रसो ब्राह्मणेष्वमृतं हितम् ॥ पा-
वमानीर्दिशन्तु न इमं लोकमथो अमुम् । कामा-
न्समवयन्तु नो देवैर्देवीः समाहृताः ॥ येन देवाः
पवित्रेणात्मानं पुनते सदा । तेन सहस्रधारेण पा-

वमानः पुनातु मा ॥ प्राजापत्यं पवित्रं शतद्योतं हिरण्ययम् । तेन ब्रह्मविदो वयं पूतं ब्रह्म पुनीमहे ॥ इन्द्रः सुनीत्या सहसा पुनातु सोमः स्वस्त्या । वरुणः समीच्या ॥ यमो राजा प्रमृणाभिः पुनातु जातवेदाः । ऊर्जयन्त्या पुनातु मा ॥ ऋषयस्तु तदपस्तापे सर्वे सर्वजिगीषवः । तपसस्तपसोऽध्यायन्तु पावमानी ऋचोदब्रवीत् ॥ यन्मे गर्भे वसतः पापमुग्रं यज्जायमानस्य च किञ्चिदन्यत् । जातस्य च यच्चापि च वर्धतो मे तत्पावमानीभिरहं पुनामि ॥ माता पित्रोर्यन्न कृतं वचो मे यत्स्थावरं जङ्गममाबभूव । विश्वस्य यत्प्रहरिषितं वचो मे तत्पावमानीभिरहं पुनामि ॥ गोघ्नात्तुष्कराद्वा स्त्रीवधाद्यत्किल्विषम् । पापकं च चरणेभ्यस्तत्पावमानीभिरहं पुनामि ॥ ब्रह्मवधात्सुरा-

पानात्सुवर्णस्तेयाद्वृषलिगमनमैथुनसङ्गमात् । गुरोर्दाराभिगमनाच्च तत्पावमानीभिरहं पुनामि । बालघ्नान्मातृपित्रोर्वधाद्भूमितस्करात्सर्ववर्णगमनमैथुनसङ्गमात्पापेभ्यश्च प्रतिग्रहात् । सद्यः प्रहरन्ति सर्वदुष्कृतं तत्पावमानीभिरहं पुनामि ॥ क्रियविक्रयाद्योनिदोषाद्भत्त्याद्भोज्यात्परिग्रहात् । असम्भोनाच्चापि नृशंसं तत्पावमानीभिरहं पुनामि ॥ दुरिष्टं दुरधीतं पापं यच्चाज्ञानतः कृतम् । अयाचिताच्चासंयाज्यात्तत्पावमानीभिरहं पुनामि ॥ ऋतस्य योनयोऽमृतस्य धाम विश्वादेवेभ्यः पुण्यगन्धास्ता न आपः प्रहरन्ति पापम् । शुद्धो गच्छामि सुकृतां लोके तत्पावमानीभिरहं पुनामि ॥ पावमानीः स्वस्त्ययनीर्याभिर्गच्छति नन्दनम् । पुण्यांश्च भक्ष्यान्भक्षयत्यमृतत्वं च गच्छति ॥ पावमान्यं परंब्रह्म शुक्रं ज्योतिः

सनातनम् । पितृंस्तस्योपतिष्ठन्ति क्षीरं सर्पिर्मधूदकम् ॥ पावमानीः पितृन्देवान्ध्यायेद्यच्च सरस्वतीम् । पितृंस्तस्योपतिष्ठेत्तु क्षीरं सर्पिर्मधूदकम् ॥ अनेन० अक्षय्यतृप्तिरस्तुपावमानीमन्त्रा प्रीयन्तां प्रीताः सन्तु ॥ इति तर्पणे पावमानीब्राह्मणम् ॥

## अथाग्निसाधनम् ।

"घृतलिप्तकांस्यपात्रे संस्थापितमग्निं कन्याहस्तेनानीय । ब्राह्मणः" सं वः सृजामि । अश्विनोः । गायत्रं नमः ३ हिरण्यवर्णाः शु ४ आपो हिष्ठेति संजीव्य" । क्रव्यादमग्निं प्रहिणोमि दूरं यमराज्ञो गच्छतरिप्रवाहः । इहैवायमितरो जातवेदा देवेभ्यो हव्यं वहतु प्रजानन् "इति दर्भद्वयं प्रज्वाल्य" । योऽग्निः क्रव्यात्प्रविवेश वो गृहमिदं पश्यन्नितरं जातवेदसम् । तं हरामि पितृयज्ञाय देवं सुघर्मपिन्वाद्धर मे सधस्थे "इति

दक्षिणतस्त्यक्त्वा प्राणायामं कृत्वाऽग्निं हस्ताभ्यां गृहीत्वा यो अश्वत्थः शमीगर्भः—अजयो लोकान्प्रदिशश्चतस्र "इत्यन्तं चन्द्रसूक्तं पठन्नवसान्यां क्षिपेत्" ॥ उर्वश्यसि आयुरसि पुरूरवा असि यत एव प्रथमं जज्ञे। अग्निरेभ्यो योनिभ्यो जनितो जातवेदाः स गायत्र्या त्रैष्टुभा जगत्याऽनुष्टुभा देवेभ्यो हव्यं वहतु प्रजानन् । सहाऽग्नेरग्निना जायस्व सह रय्या सह पुष्ट्या सह प्रजया सह ब्रह्मवर्चसेन अजनि । अग्निर्होता पूर्वःपूर्वेभ्यः पवमानः पावकः शुचिरीड्यः असुरासि प्रथमजा । असुर्नामासुरध्यसे असुरहमसुस्त्वं किमद्यासुरसुङ्करदसोरसुं प्रतीतनमज्ञन्वीध्वम् । भूर्भुवः स्वराङ्गिरसां त्वां देवानां व्रतेनादधे । आदित्यानां त्वां देवानां व्रतेनादधे । द्यौर्महा भूमिर्भूम्ना तस्यास्ते देव्यदिते उपस्थेनादमन्नाद्यायुप

त्यायादधे । अयं गौः पृश्निरक्रमीदस्मन्मातरं पुरः पितरं च प्रयत्सुः । अग्ने गृहमतेऽहिर्बुध्न्य परिषद्य दिवः पृथिव्याः पर्यन्तारिक्षाद्विन्द । यजमानाय पृथिव्या भूम्नन्सीद यज्ञिये लोको यो नो अग्ने ऽनिष्टो यो अग्निष्ठो अभिदासति इदमहं तं त्वया-भिदधामि । सुगार्हपत्ये निर्णुदन्नुशतीं रुषे श्री-यसी श्रेयसे नः । दीर्घायुत्वाय शतशारदायाभिय-स्व महते सौभगाय "इति सहिरण्यरत्नजलेन सिञ्च-यित्वा" यास्ते शिवास्तन्वो जातवेदो या अन्तरि-क्षे दिवि याः पृथिव्यां ताभिः सम्भूय सगणास-जोषा हिरण्ययोने वह हव्यमग्ने । स त्वमग्ने ज्यो-तिषा भाहि समन्तरिक्षेण सं पार्थिवेन वैश्वानर्या समिधा देधिहि नः । ऊर्जस्वत्या भास्वत्या रश्मि-वत्या ज्योतिष्मत्या ॥ सप्त ते अग्ने समिधः सप्त

जिह्वाः सप्तर्षयः । सप्त धाम प्रियाणि सप्तहोत्रा अनुविद्वान्सप्त योनीरापृणस्वघृतेन । पुनस्त्वादित्या रुद्रावसवः समिन्धन्तां पुनर्ब्रह्मणोऽवसनीथ यज्ञैः । घृतेन ते तनुं वर्धयामि सत्याः सन्तु यजमानस्य कामाः । "इत्यरणीकाष्ठं सप्तसमिधो वाऽग्नौ दद्यात्" ॥ प्रजापतये स्वहा ॥ अग्न आयाहि वीतये गृणानो हव्यधातवे । निहोता सत्सि बर्हिषि ॥ अग्निर्दूतं वृणीमहि होतारं विश्ववेदसम् । अस्य यज्ञस्य सुक्रतम् ॥ अग्निमग्निं हवीमभिः सदा वहन्तु विश्पतिम् । हव्यवाहं पुरुप्रियम् ॥ अग्निदेवो इहावह जज्ञानो वृक्तु बर्हिषि । अस्य होता न ईड्यः ॥ ते विश्वतो विबोधय यदग्ने यामि दूत्यम् । देवैरासपि बर्हिषि ॥ घृतावहन्तु दीदिवा प्रतिष्म रिषतो दह । अग्ने त्वं रक्षस्वनः ॥ अग्निमग्निं समि-

ह्यते कविर्ग्रहपतिर्युवा । हव्यवाडाञ्जुह्वास्याः ॥ क्रविमग्निमुपस्तुहि सत्यधर्माणमध्वरे । देवममीवचातनम् ॥ यस्त्वामग्ने हविष्मतिर्दूतं देवसुपर्षति ॥ तस्य सुप्राविता भव ॥ यो अग्निर्देववीतये हविष्मां अविवासति । स नः पापमपनुदत् ॥ तस्मै पावक दीदिवो अग्निदेव इहावह । उप प्रियं हविं च नः ॥ अग्ने शुक्रेण शोचिषा विश्वेभिर्देवहुतिभिः । इमं स्तोमं जुषस्व नः ॥ चितिः स्रुक्चित्तमाज्यं वाग्वेदिराधीतं बर्हिः केतो अग्निर्विज्ञातमग्निर्वाचस्पतिर्होता मन उपवक्ता प्राणो हविः सामाऽध्वर्युरिन्द्रं गच्छ ॥ "इति पुष्पाद्यैः सम्पूज्य प्रार्थयेत्" ॥ संमुखा तिष्ठ वेदि त्वं यथा स्थास्यन्ति देवताः । स्थानभूता शिवादीनां शक्तीनां सुरपूजिते ॥ ब्रह्माज्ञयाद्य मे यज्ञं सफलीकर्तुमर्हसि ॥ "आकृष्णे-

नेति प्रदक्षिणं कृत्वा मुखेन अग्नेशकेमेति मन्त्रं पठित्वा धमयेत्" ॐ हुं हुतभुजे स्वाहा ३ ॥ "ततोऽन्न-सहितहिरण्यादि सङ्कल्पयेत्" ॐ अद्यतावत् पितॄणां स्वर्गप्राप्त्यर्थं आत्मनः पुण्यवृद्ध्यर्थं अग्निप्रतिग्रह-णार्थमिममन्नादि सङ्कल्पयामिनमः ॥ ततोऽग्निकर्म ॥ पात्रं तिला । अग्निकुण्डपूजा अग्नये समनमदिति पठेत् ॥ इत्यग्निसाधनविधिः ॥

## अथ शय्यादानविधिः

आदौ तण्डुलचूर्णेन ब्रह्मकलशं प्रतिमाकलशं तद्द-क्षिणे दशदिक्पालानां तन्मध्ये वेदचतुष्टयीकलशान्क्षेत्र-पालद्वयं च संस्थाप्य ॥ अभिनोदेवी—वषट् ते विष्ण तावत् ॥ प्रदानं । तद्विष्णोः । वासुदेवाय नमः ८ विष्णप्रतिमायां वनस्पते विदाङ्गोहिभूया अस्मत्सखा प्रतरणः स्ववीरः । गोभिः सन्नद्धो अस्य वीरयस्व

स्वस्थोजयतु जित्वानि । ब्रह्मजज्ञानं- । वषट्ते वि-
ष्णा- । प्रतद्विष्णुः ॥ अयङ्गौः पृश्निरक्रमीदसदन्मातरं
पुनः । पितरं च प्रयत्सुः ॥ रथे अक्षेषु । या हस्तिनि ।
सिंहे व्याघ्रे- । या राजन्ये- । वनस्पतेः पृथिवी
सजुषा उभारोदसी परिपासितुनः । अनुड्वदुर्वीरोद-
सी जिहीथा सनोधृतो वरुण इन्द्रसखा ॥ वासु-
देवाय० ८ शेषशायिने नारायणाय ततो दिक्पाल-
कलशेषु ॥ इन्द्रः पर्वता बृहता- । इन्द्रायनमः ।
अग्निं सस्निं,-अग्नयेनमः । यमो दाधार,-यमायनमः ॥
यन्ते देवी,-नैर्ऋतयेनमः । उदुत्तमं,-वरुणायनमः ।
वायवायाहि,-वायवेनमः । सोमोधेनुं,-कुवेरायनमः ।
ईशानन्त्वा,-ईशानायनमः । ब्रह्म जज्ञानं,-ब्रह्मणेनमः
अयङ्गौः पृश्निरक्रमीदसदन्मातरं पुनः । पितरं च
प्रयत्सुः । अनन्तायनमः ॥ वेदचतुष्टये । वषट्ते वि-

ष्णा– । अग्निमीळे– । इषेत्वोर्जेत्वा– । अग्न आया-
हि– । शन्नोदेवी– । विष्णुपञ्चायतनदेवताभ्योनमः
ऐन्द्राग्नं ॥ यजमानमानीय । अनाभौ । पुरुषसूक्तन्यासः
तीर्थेस्नेयं । यत्रास्तिमाता । महागणपतये । वासु-
देवाय ८ शेषशायिने नारायणाय । इन्द्रय वज्र-
हस्ताय १० । विष्णवेसानुचराय पृथिव्यै अग्नये
ऋग्वेदाय ब्रह्मणे छन्दोभ्यः ४ हेरुकादिभ्यो श-
य्यादाननिमित्ते दीपोनमः धूपोनमः । अपसव्येन ।
समस्तमातापितृभ्यो दीपः स्वधा । सव्येन । अ-
श्विनोः० । अनाभौ ॐभूः पुरुषमावाहयामि नमः ३
सर्वा विष्णुगायत्रीः । अद्यतावत्० महागणपतेः वा-
सुदेवस्य शेषशायिनः नारायणस्य । इन्द्रस्यवज्रह-
स्तस्य १० विष्णोः सानुचरस्य पृथिव्याः० हेरुका-
दीनां आत्मनो पितृणां स्वर्गप्राप्त्यर्थं कलशपू० वि-

ष्णुपू० दिक्पालपू० चतुर्वेदेश्वरपूजनमर्चाभहं करिष्ये ॐकुरुष्व ॥ एवमेवासनं । महागणपतये त्वां पूजयामि । सहस्रशीर्षा । युञ्जते मान० महागणपतिं वासुदेवं शेषशायिनं नारायणं । इन्द्रं वज्रहस्तं । विष्णुं सानुचरं पृथिवीं हेरुकादीन् आवाहयिष्यामि ॥ आवाहयाम्यमर० । दिक्पालेषु ॥ पूर्वे । एह्येहि सर्वामरसिद्धसाध्यैरभिष्टुतो वज्रधरामरेश । संवीज्यमानोऽप्सरसां गणेन रक्षाध्वरं नो भगवन्नमस्ते । इन्द्रापर्वता ॥ आग्नेये । एह्येहि वैश्वानर हव्यवाह मुनिप्रवीरैरभितोभिजुष्टः । तेजोवतीलोक गणेन सार्धं ममाध्वरं रक्ष विभो नमस्ते ॥ अग्निं सप्तिं० ॥ दक्षिणे ॥ एह्येहि वैवस्वत लोकनाथ सुरासुरैरर्चित दिव्यमूर्ते । शुभाऽशुभाचारविचारसाक्षिन् शिवाय नः पाहि मखं नमस्ते ॥ यमो दा-

धार० ॥ नैर्ऋते ॥ एह्येहि रक्षोगणनायकस्त्वं विशालवेतालपिशाचसंघैः । ममाध्वरं पाहि शुभाधिनाथ लोकेश्वरस्त्वं भगवन्नमस्ते ॥ अन्ते देवे० ॥ पश्चिमे । एह्येहि यादोगणवारिधीनां गणेशपर्जन्ययुतः प्रचेताः । विद्याधरेन्द्रामरगीयमानः पाहि त्वमस्मान्भगवन्नमस्ते ॥ उदुत्तमं ॥ वायवे । एह्येहि यज्ञे मम रक्षणाय मृगाधिरूढः सह सिद्धसंघैः । समीरण प्राणवतीसहायो गृहाण पूजां भगवन्नमस्ते ॥ वायवायाहि ॥ उत्तरे । एह्येहि यक्षेश्वर यज्ञरक्षां कुरुष्व यक्षादिगणेन साकम् । सर्वैर्निधीशैः सह भूतसंघैर्गृहाण पूजां भगवन्नमस्ते ॥ सोमोधेनुं । ईशाने । एह्येहि विश्वेश्वर नस्त्रिशूलकपालखट्वाङ्गधरैश्च साकम् । भूतेश लोकेश्वर यज्ञसिद्ध्यै गृहाण पूजां भगवन्नमस्ते । ईशानन्त्वा० ॥ ऊर्ध्वे ।

एह्येहि विश्वाधिपते मुनीन्द्रलोकेन सार्धं पितृदेवताभिः । चतुर्मुख त्वं भव नः शिवाय पितामहायाद्य विभो नमस्ते । ब्रह्म जज्ञानं० । अधः । एह्येहि पातालधराधरेन्द्रनागाङ्गनाकिन्नरगीयमानः । रक्षोगणेन्द्रामरलोकयुक्तोऽप्यनन्त रक्षाध्वरमस्मदीयम् । अयङ्गौः पृश्निरक्रमीदसदन्मातरं पुनः । पितरं च प्रयत्सुः । वषट्ते विष्णो० । मध्ये । आवाहयाम्यहं देवं विष्णुं सानुचरं विभुम् । चतुर्वेदेश्वरं श्रेष्ठं मध्ये तिष्ठन्तमव्ययम् । प्रतद्विष्णुः० । पूर्वे । आवाहयामि पृथिवीमग्निना संयुतां शुभाम् । ब्रह्माणं पूर्वतो देशे छन्दांसि सर्वसिद्धये । अग्निमीळे ॥ दक्षिणे आवाहयाम्यन्तरिक्षं यजुर्वेदं च मारुतम् । ब्रह्माणं दक्षिणदेशे छन्दांसि सर्वसिद्धये । इषे त्वोर्जे । पश्चिमे । दिवमावाहयिष्यामि सूर्यसोमसमन्वितताम् । ब्रह्माणं

पश्चिमेदेशे छन्दांसि सर्वसिद्धये ॥ अथ आयाहि० । उत्तरे । दिशश्चन्द्रमसं देवमथर्वणयुतं शुभम् । आवाहयामि ब्रह्माणं छन्दांसि चोत्तरादिशि ॥ शन्नोदेवी । भगवन्पु० । एवं पाद्यादि दक्षिणान्तं ॥ अथाग्निकर्म० । पूर्णां दत्त्वा शय्यापूजा ॥ नमस्कारः । प्रसीद मम हे विद्वन् भगवंस्त्वा नुता वयम् । अनुग्रहार्थमस्माकं शय्येयं प्रतिगृह्यताम् । प्राङ्मुखः प्रतिगृहीता । तद्वामेशय्यामभ्युक्षेत् । आपोहिष्ठाः ३ हिरण्यवर्णाः शु० ४ न वहन्तीभिः स्नायाद्यद्वहन्तीभिः स्नायात्क्षेत्रं यश ऋच्छेन्न कूप्याभिः स्नायाद्विषं यश ऋच्छेत् स्थावराभिः स्नायादेता वामपां दीक्षिताः पशुमतीर्याः स्थावरा लोमशाः सन्ततः लोमशाः पशवो यजमानमेव यशमर्पयन्ति ॥ वनस्पते विदाङ्गोहि भूयादस्मत्सखा प्रत-

रणः स्ववीरः । गोभिः सन्नद्धो अस्य वीरयस्व स्वस्थोजयतु जितानि ॥ अत्रादौ शय्यायामुपरि विष्णुप्रतिमां यथोचितं सर्वसम्भारं च संस्थाप्य ॥(शय्यापदचतुष्टये रत्नदीपचतुष्टयं स्थाप्यं दक्षे अन्नादीनि वामे सस्यादीनि पूर्वे आज्यपात्रं अधो भाण्डादीनि स्थापयेत् कुशब्राह्मणं च संस्थाप्य)। ॐभूः पुरुषमावाहयामीति सर्वां विष्णुगायत्रीः शय्यासनायै वि, चतुष्पदायै धी, तन्नः शय्या प्र ३ ॥ धर्मरूपायै वि, चतुरङ्गायै धी, तन्नः शय्या प्र ३ ॥ महालक्ष्म्यै वि, पृथ्वीरूपायै धी, तन्नः शय्या प्र ३ ॥ अद्यतावत् भगवतः शेषशायिनः लक्ष्मीयुतस्य नारायणस्य वासुदेवस्य धर्मस्य विष्णो पृथ्वीरूपायाः शय्यायाः आत्मनो० पितुस्तस्यानन्तैश्वर्यभोगासिद्ध्यर्थं शय्यादाननिमित्तं ब्राह्मणपूजनं शय्यापूजन-

मर्चामहं करिष्ये । एवं शेषशायिनः । पृथ्वीरूपायाः शय्यायाः इदमासनंनमः । शेषशायिने लक्ष्मीयुतायनारायणाय पृथ्वीरूपायै शय्यायै त्वां पूजयामि । भगवन्तंशेषशायिनं लक्ष्मीयुतं नारायणं पृथ्वीरूपां शय्यामावाहयिष्यामि ॥ किं भूयसा तरुणनीरदनीलमूर्तिः पीताम्बरः कमलपत्रविशालनेत्रः। कौमोदकीकमलकम्बुरथाङ्गलक्ष्मा लक्ष्मीपतिः पथिपथि प्रभुराविरास्ताम् ॥ शन्नोदेवी । शेषशायिने० पृथ्वीरूपायै शय्यायै पाद्यंनमः । भगवन् शेषशायिन् नारायण पृथ्वीरूपे शय्ये इदं वोर्घ्यंनमः । शेषशायिने नारायणाय पृथ्वीरूपायै शय्यायै समालभनं गन्धोनमः । पुरुषसूक्तलक्ष्मीसूक्ताभ्यां, पुष्पार्घौ पूर्वेनारायणायनम इत्यादि । खरेपु । ऋग्वेदायनमः यजुर्वेदायनमः सामवेदायनमः अथर्व-

णवेदायनमः वासुदेवाय जगन्नाथाय सङ्कर्षणाय प्रद्युम्नाय अनिरुद्धाय आखण्डलाय अग्नये। प्रच्छादनवस्त्रे । कान्त्यै लक्ष्म्यै मेधायै धरायै धृत्यै तुष्ट्यै पुष्ट्यै श्रद्धायै क्रियायै मत्यै बुद्ध्यै लज्जायै वपुषे शान्त्यै मातृभ्यः पूर्वे मेरवे दक्षिणे मन्दाराय पश्चिमे कैलासाय उत्तरे मलयाय आग्नेये गन्धमादनाय नैर्ऋते श्रीगिरये वायवे हेमकूटाय ईशाने सह्याय 'मध्ये' ऐरावणाय पुण्डरीकाक्षाय वामनाय । अथध्वजपूजा । कुमुदाय अञ्जनाय पुष्पदन्ताय सार्वभौमाय सुप्रतीकाय वर्धमानाय सुवृद्ध्यै अतिवृद्ध्यै पृथुश्रवाय कूर्माय अनन्ताय वासुकये कार्कोटाय तक्षकाय पद्माय महापद्माय कुलिकाय शङ्खपालाय। मध्ये । अचलादेव्यै । शिरउपधाने । शिरस्त्राणरूपाय ध्रुवाय अनन्ताय शेषाय 'ऊर्ध्वे' उदयाचला-

य 'अधः' अस्ताचलाय 'मध्ये' पृथिव्यैनमः ।
ततः शय्याया वास्तुरूपत्वात् । ईशानाय पर्जन्या-
य जयन्ताय इन्द्राय सूर्याय सत्याय भृशाय आ-
काशाय अग्नये पूष्णे वितथाय गृहक्षताय यमाय
गन्धर्वाय भृङ्गिराजाय मृगाय पितृगणाय दौवारि-
काय सुग्रीवाय पुष्पदन्ताय वरुणाय असुराय शे-
षाय रोगाय वायवे वासुकये मुख्याय बलाटाय
सोमाय सूर्याय अदितये दितये अर्यम्णे सवित्रे
सावित्राय विवस्वते इन्द्राय जयाय मित्राय रुद्राय
राजयक्ष्मणे पृथ्वीधराय आपाय आपवत्साय ब्रह्मणे
ॐभूर्लोकाय भुवोलोकाय स्वर्लोकाय महोलोकाय
जनोलोकाय तपोलोकाय सत्यलोकाय अतलाय
वितलाय सुतलाय रसातलाय तलातलाय महात-
ला पातालायनमः । अथ छत्रपूजा । आकाशाय

अन्तरिक्षाय दिवे सूर्याय प्रजापतये वायवे तारकेभ्यो सप्ताऽकाशेभ्यो द्वादशादित्येभ्यो चतुर्दशप्रजापतिभ्यो दशवसुभ्यो सप्तविंशतिनक्षत्रेभ्यो आदित्याय रवये गभस्तये भानवे सवित्रे दिवाकराय धर्माय तपनाय भास्कराय सूर्याय त्वष्ट्रे स्वर्पतये विवस्वते अर्काय सहस्ररश्मये पूष्णे मित्राय मधुच्छन्दसे गार्ग्याय उपमन्यवे कश्यपाय मनवे अत्रये विष्णवे हारीताय याज्ञवल्क्याय नारदाय अङ्गिरसे यमाय आपस्तम्भाय संवर्ताय कात्यायै बृहस्पतये पराशराय व्यासाय शंखलिखिताभ्यां दक्षाय गौतमाय शातातपाय प्राणाय अपानाय समानाय उदानाय व्यानाय नागाय कूर्माय कृकराय देवदत्ताय धनञ्जयाय त्रिशूलिने ब्रह्मणे विष्णवे रुद्राय शय्यायै अर्घोनमः पुष्पंनमः । धूपोनमः । वासोनमः । ए-

तासां दे० । अन्नंनमः अपोशानंनमः । सैव दक्षिणा । दिक्पालयुतवेदचतुष्टयीं विसृज्य । ॐगायत्र्यै नमः अद्यतावत् इन्द्रस्यवज्रहस्तस्य० । विष्णोः सानुचरस्य पृथिव्याः अग्नेः० आत्मनो पितुः स्वर्गैश्वर्यप्राप्त्यर्थं शय्यादाननिमित्तं दिक्पालयुतचतुर्वेदेश्वरपूजनमच्छिद्रं । यवोदकं । आपन्नोऽस्मि । ऐरावणसमारूढं स्वर्णवर्णकिरीटिनम् । सहस्रनयनं शक्रं वज्रहस्तं विभावयेत् १ सप्तार्चिषं तु बिभ्राणमक्षमालाकमण्डलुम् । ज्वालामालाकुलं रक्तं शक्तिहस्तं विभावयेत् २ कृतान्तं महिषारूढं दण्डहस्तं भयानकम् । कालपाशधरं कालं ध्याये दक्षिणादिक्पतिम् ३ रक्तनेत्रं शवारूढं ध्याये नीलोत्पलप्रभम् । कृपाणपाणिमस्त्रौघं पिबन्तं राक्षसेश्वरम् ४ नागपाशधरं हृष्टं रत्नौघद्युतिविग्रहम् । शशाङ्कधवलं

ध्याये वरुणं मकरासनम् ५ आपीतहरिणच्छायं विलोलध्वजधारिणम् । प्राणभूतं स्मरेन्नृणां हरिणस्थं समीरणम् ६ कुबेरमीश्वरभक्तं सर्वगं सर्वविग्रहम् । स्वर्णच्छायं गदाहस्तमुत्तराधिपतिंस्मरेत् ॥ ७ ॥ ईशानं वृषभारूढं त्रिशूलव्यालधारिणम् । शरच्चन्द्रावतंसं च चन्द्रमौलिं त्रिलोचनम् ८ पीनं पीतं चतुर्बाहुं ब्रह्माणं चतुराननम् । हंसयानं च बिभ्राणं दण्डाक्षस्रक्कमण्डलुम् ९ अनन्तं पुण्डरीकाक्षं कूर्मारूढं विचिन्तयेत् । शङ्खचक्रगदापद्मवनमालायुतं स्मरे ॥ १० ॥ आह्वानं । नमोब्रह्मणे ॥ ततः । एह्येहि सर्वामरेत्याचाहनश्लोकमन्त्रैः शय्यायाः पूर्वादिदिक्षु दिक्पालकलशान् पादेषु वेदेश्वरांश्च । अग्निमीळे इत्यादिमन्त्रैः प्रक्षिपेत् ॥ शय्यायाः पूर्वदिशि घृतकुम्भसप्तसस्यादि सर्वसम्भारान् संस्थाप्य कर्पासाच्छादि-

तद्दक्षिणखुरेणोपरिस्पर्शेन प्रतिपादयेत् । सावित्राणि अद्यतावत् पितुः अक्षयैश्वर्यप्राप्त्यर्थं विष्णुरूपाय ब्राह्मणाय इमां शय्यां भूमिरूपां घृतकलशयुतां सप्तसस्यमणिमुक्तपञ्चरत्नकुङ्कमचन्दनादियुतां सर्वदेवतास्थानभूतां सहिरण्यां सवाससं ददानि ३ दत्त्वा विज्ञापयेद्देवं विष्णुं वै विश्वरूपिणम् । लक्ष्मीयुतं महौजस्कं शेषशायिनमीश्वरम् ॥ वासुदेवो जगन्नाथस्तथा सङ्कर्षणो विभुः । प्रद्युम्नश्चानिरुद्धश्च भवन्तु विजयाय मे ॥ यस्मादशून्यंशयनं केशवस्य शिवस्य च । शय्या ममाप्यशून्यास्तु तस्माज्जन्मनि जन्मनि ॥ शेषभूतं तु पर्यङ्कमुपस्करणसंयुतम् । श्रीविष्णवे ब्राह्मणाय दत्तमस्तु सुखप्रदम् ॥ लक्ष्मीरूपामिमां शय्यामुपस्करणसंयुताम् । धर्मसंवर्धनायैवमङ्गीकुरु जनार्दन ॥ शय्यां ददानि ३ ॥ क इदं

कस्मा अदात् ॥ प्रतिग्रह्णामि ३ ततो विप्रहस्ते तर्पणम् । ब्रह्माणं तर्पयामि विष्णुं महेश्वरं वह्निं सूर्यं सोमं वरुणं वायुं यमं कुबेरं इन्द्रं पृथिवीं अपः तेजसं आकाशं अग्निं आदित्यं वरुणं चन्द्रमसं कुमारं अङ्गारकं विष्णुं बुधं इन्द्रं बृहस्पतिं सरस्वतीं शुक्रं प्रजापतिं शनैश्चरं विनायकं राहुं रुद्रं केतुं ब्रह्माणं ध्रुवं केशवं अनन्तं अगस्त्यं कालं विश्वकर्माणं प्रजापतिं वसून् रुद्रान् आदित्यान् मरुतः साध्यान् ॥ कण्ठोपवीती । ऋषीन् तर्पयामि देवर्षीन् ब्रह्मर्षीन् राजर्षीन् सिद्धर्षीन् विद्याधरर्षीन् गन्धर्वान् नागान् वैनतेयान् अप्सरसः समुद्रान् पर्वतान् नक्षत्राणि नक्षत्रदेवताः देवमातृः देवपत्नीः देवपुत्रान् वेदान् वेदाङ्गानि यज्ञान् यज्ञाङ्गानि धर्मं अर्थं कामं शास्त्रप्रणीतृन् सत्यान् दिशः विदि-

शः दिक्पतीन् तीर्थानि नदीः सप्तलोकान् विश्वान्देवान् श्रियं सरस्वतीं दिवाचरान् नक्तंचरान् सप्तर्षीन् वालखिल्यानृषीन् शेषर्षींस्तर्पयामि अपसव्येन उशन्तस्त्वा० पितॄन् तर्पयामि पितामहान् प्रपितामहान् मातृः पितामहीः प्रपितामहीः मातामहान् प्रमातामहान् वृद्धप्रमातामहान् मातामहीः प्रमातामहीः वृद्धप्रमातामहीः समस्तमातापितरः मातृपक्ष्यातु, शय्योदकेन ते सर्वे—हिमपानादि । सव्येन वसन्ताय नमः । नमो देवेभ्यः ॥ ततः शय्यायामुपविष्टस्य ब्राह्मणस्य पादाभ्यङ्गादि सेवां पुरुषसूक्तलक्ष्मीसूक्ताभ्यां कुर्यात् । नागेन्द्रभोगशयनासन देवदेव लक्ष्मीनिवास पुरुषोत्तम वाजिवक्त्र । नानाविचित्रमणिरत्नविभूषिताङ्ग दुःस्वप्ननाश भगवञ्जय वासुदेव ॥ ततो ब्राह्मणशय्ययोः पृच्छां सम्पाद्य । ॐभूःपुरुषं-

विसर्जयामि नमः ३ अद्यतावत् भगवतः शेषशायिनः नारायणस्य पृथ्वीरूपायाः शय्यायाः अत्मनो पितुस्तस्यपरलोके अनन्तैश्वर्यभोगसिद्ध्यर्थं शय्यादाननिमित्तं ब्राह्मणपूजनं शय्यापूजनमच्छिद्रं सम्पूर्णमस्तु । यवोदकं नमः । प्रतिमाशय्ययोः क्षमापुष्पाणि ॥ आपन्नोस्मि शरण्योसि । ध्येयःसदा सवितृमण्डल इत्यादि विष्णोः क्षमापुष्पाणि ॥ ततः प्रतिगृहीता पठेत् । प्रतिग्रह्णामि शय्ये त्वां कुटुम्बार्थे विशेषतः । सर्वदेवमयीं देवीं लक्ष्मीरूपां नमाम्यहम् ॥ आयुर्बलं यशोवर्चः प्रजापशुवसूनि च । ब्रह्मप्रज्ञां च मेधां च त्वं नोदेहि जगन्मयि ॥ उदकलशं ॥ मन्त्रार्थः। पूर्णां दत्त्वा वैश्वदेवादि नित्यकर्म कृत्वा ब्रह्मकलशपूच्छां सम्पाद्य क्षमापुष्पाणि । नमो ब्रह्मणे। उदकलशं। मन्त्रार्थः॥ इति शय्यादानम् ॥

## अथ दानप्रतिष्ठा ।

१ घटदानं याम्यपुरे । कलशं शुभदं दिव्यं जलेन परिपूरितम् । दानेनास्य सदा सौख्यं शान्तिरस्तु गृहे मम ॥ जलं ब्रह्ममयं साक्षाज्जीवितं सर्वदेहिनाम् । जलदानं तु तस्माद्धि वाञ्छितार्थप्रदायकम् ॥ वारिणा पूरितं कुम्भं तापत्रयहरं शुभम् । पितृणां तुष्टिदं सौख्यं गृहाण त्वं सुखाय नः ॥ घोरायां याम्ययात्रायां क्षुत्पिपासाश्रमभयाः । तेषां निवारणार्थाय सान्नं कुम्भं ददाम्यहम् ॥ अन्नं ब्रह्मरसं साक्षाल्लोकानां प्राणधारकम् । अन्नदानेन वै कामान् भुक्त्वा सायुज्यमाप्नुयात् ॥ अन्नाद्याः साधुतां यान्ति लवणेन रसाश्च ये । नित्यं लवणदानेन मम सन्तु मनोरथाः ॥ सौभाग्यदं निष्कदानं नृभिःकार्यं प्रयत्नतः । सर्वकामप्रदं पर्वकालेषु च विशे-

पतः ॥ अद्यतावत् पितुः आद्यमौर्ध्वदैहिके प्रथमे एको—याम्यपुरे अत्यन्तविश्रान्तिप्राप्त्यर्थमिदं जलकुम्भं लवणवस्त्रतुण्डलादियुतं ददानि ३ प्रतिगृह्णामि ३ ॥ १ ॥

२ अन्नदानं सौरिपुरे । अन्नं ब्रह्मरसं साक्षाल्लोकानां प्राणधारकम् । अन्नदानेन वै कामान् भुक्त्वा सायुज्यमाप्नुयात् ॥ अन्नाद्याः साधुतां यान्ति लवणेन रसाश्च ये । नित्यं लवणदानेन मम सन्तु मनोरथाः ॥ सौभाग्यदं निष्कदानं नृभिः कार्यं प्रयत्नतः । सर्वकामप्रदं पर्वकालेषु च विशेषतः ॥ अन्नपते अन्नस्य नो देहि अनमीवस्य शुष्मिणः । प्रप्रदातारं तारिषमूर्जं नो देहि द्विपदे शं चतुष्पदे ॥ अद्यतावत् पितुः प्रथममासिके द्वितीये एको—सौरिपुरे क्षुत्पिपासादिदुःखनिवारणार्थमिद-

न्नं ददानि ३ ॥ २ ॥

३ वस्त्रदानं नगेन्द्रभवने ॥ शीतोष्णवातादिभयहारकं कान्तिभाग्यदम् । लज्जादिशमनं वस्त्रं स्वस्तिदं मेऽस्त्वतः सदा ॥ युवा सुवासाः परिवीत आगा स उच्छ्रेयान्भवति जायमानः । तन्धीरासः कवय उन्नयन्ति साध्यो मनसा देवयन्तः ॥ अद्यतावत् पितुः त्रिपाक्षिके तृतीये नगेन्द्रभवने शीतादिपीडानिवारणार्थं शय्यावस्त्रादि ददानि ३ ॥ ३ ॥

४ सुगन्धद्रव्यदानं सौम्यपुरे ॥ गन्धो मनोहरो भाव्यः शान्तिदः सुखदः सदा । तत्प्रदानेन चैवाद्य शान्तिरस्तु सदा मम ॥ कर्पूरादि शुभं विप्र गृहाणेमं सुपूजितम् । पुण्यगन्धप्रिया सा मे कमला प्रीयतां मम ॥ अद्यतावत् पितुः द्वितीयमासिके चतुर्थे सौम्यपुरे विविधयाम्यपीडानिवारणार्थमिदं

सुगन्धिद्रव्यं ददानि ३ ॥ ४ ॥

५ छत्राश्वदानं गन्धर्वपुरे ॥ सम्पदां भूषणं छत्रं वर्षातपनिवारणम् । यात्रिकप्रीतिदं मार्गे शान्तिं यच्छतु मे गृहे ॥ अद्यतावत् पितुः पञ्चपाक्षिके पञ्चमे एको-गन्धर्वपुरे अतिवृष्ट्याद्यनेकपीडानिवारणार्थं छत्राश्वौ ददानि ३ ॥ ५ ॥

६ गोधूमपिष्टदानं शैलमुञ्चकपुरे ॥ गोधूमजनितं पिष्टं शिलायंत्रविनिःसृतम् । द्विजश्रेष्ठ गृहाण त्वमतः शान्तिं प्रयच्छ मे ॥ अद्यतावत् पितुः तृतीयमासिके षष्ठे एको-शैलमुञ्चकपुरे क्षुत्पिपासादिपीडानिवारणार्थमिमं गोधूमादिपिष्टं ददानि ३ ॥ ६ ॥

७ गजलवणदानं क्रूरपुरे ॥ ऊन्नाद्याः साधुतां यान्ति लवणेन रसाश्च ये । नित्यं लवणदानेन मम सन्तु मनोरथाः ॥ अद्यतावत् पितुः चतुर्थमासिके सप्तमे

एको—क्रूरपुरे गजं सलवणं ददानि ३ ॥ ७ ॥
८ गोदानं चित्रनगरे ॥ गवामङ्गेषु तिष्ठन्ति भुवनानि चतुर्दश । यस्मात्तस्माच्छुभं मे स्यादिहलोके परत्र च ॥ अद्यतावत् पितुः पञ्चममासिके अष्टमे एकोद्दिष्टे श्राद्धे चित्रनगरे गां ददानि ३ ॥ ८ ॥
९ नौकाछत्रदानं नदीतटे ॥ संसाराब्धेः परं पारमनायासेन तारिणीम् । नानाविधाऽरित्रयुक्तामिमां नौकां ददाम्यहम् ॥ सम्पदां भूषणं छत्रं वर्षातपनिवारणम् । यात्रिकप्रीतिदं मार्गे शान्तिं यच्छतु मे गृहे ॥ अद्यतावत् पितुः ऊनषाण्मासिके नवमे एको—नदीतटे वैतरणीनदीसुखसन्तारणार्थमिमां प्रीयतेकां छत्रसंयुतां ददानि ३ ॥ ९ ॥
१० सप्तान्नदानं बह्मपदपुरे ॥ धान्यं यवा माषमुद्गमकायमाषकङ्गुःकराः । विष्णुदेहोद्भवान्यत्र सप्तस-

स्यानि संदधे ॥ अद्यतावत् पितुः षाण्मासिके दशमे ब्रह्मापदपुरे सुखसन्तारणार्थं सप्तान्नानि ददानि ३ ॥

११ व्यंजनदानं दुःखदपुरे ॥ गुडमिक्षुरसोद्भूतं रसानां परमं वरम् । सर्वदेहिप्रियमस्तु दानेन शान्तिदं मम ॥ साधु पावस्व दिव्याय जन्मने साधुरिन्द्राय सहवीतनासे । सादो मित्राय वरुणाय वायवे बृहस्पतये मधु अदाभ्यः ॥ घर्मस्थाने महारौद्रे दंशादिजीवदूषिते । व्यञ्जनं सुखदं तत्र पितॄणामस्तु दानतः ॥ आवातवाहि भेषजं विवातवाहि यद्रदः । त्वं हि विश्वस्य भेषजं देवानां दूतये यमे ॥ अद्यतावत् पितुः सप्तममासिके एकादशे दुःखदपुरे विविधदुःखनिवारणार्थं व्यञ्जनयुतं गुडं ददानि ३ ॥ ११ ॥

१२ परशुदानं घुर्घुरपुरे ॥ ज्ञानाज्ञानकृतं पापं मया लोभवशाच्च यत् । लोहशस्त्रप्रदानेन सर्वं नश्यतु

तत्क्षणात् ॥ अद्यतावत् पितुः अष्टममासिके द्वादशे घुर्घुरपुरे नानापीडानिवारणार्थमिमं परशुं ददानि १२
१३ उष्णीषदानं तप्तपुरे ॥ शीतोष्णवातादिभयहारकं कान्तिभाग्यदम् । शिरोलङ्करणं मेऽस्तु चोष्णीषं शान्तिदं सदा ॥ अद्यतावत् पितुः नवममासिके त्रयोदशे तप्तपुरे विविधापन्निवारणार्थमिमं शिरोवे. ष्टनं ददानि ३ ॥ १३ ॥
१४ अग्निभाण्डदानं रौद्रपुरे ॥ हिमशीतसमीराणां हसन्तीं च हसन्तिकाम् । उज्ज्वलाङ्गारसंयुक्तां स्वान्पितृंस्त्वा ददाम्यहम् ॥ अद्यतावत् पितुः दशममासिके चतुर्दशे रौद्रपुरे विविधदुःखनिवृत्यर्थमिममग्नि. भाण्डं ददानि ३ ॥ १४ ॥
१५ सुवर्णछत्रदण्डदानं पर्जन्यपुरे ॥ हिरण्यगर्भगर्भ. स्थं हेम बीजं विभावसोः । अनन्तपुण्यफलदं दान.

तोऽस्तु शिवाय मे ॥ हिरण्यगर्भः समवर्त्तताग्रे भूतस्य
जातः पतिरेक आसीत् । स दाधार पृथिवीं द्यामुतेमां
कस्मै देवाय हविषा विधेम ॥ अद्यतावत् पितुः एका-
दशमासिके पञ्चदशे एको० तस्यपरलोके पर्जन्यपुरे
सुखसंप्राप्त्यर्थं सुवर्णयुतं छत्रं ददानि ॥
१६ चामरदानं षोडशे । घर्मदेशे घोररूपे मक्षिकादि-
विदूषिते । तेषां निवारणार्थाय तालवृन्तं दधाम्यहम् ॥
अद्यतावत् पितुः ऊनसांवत्सरिके वा द्वादशमासिके
षोडशे शीताभिधानपुर इमं चामरं दधानि ॥ ३॥
१७ अनाथानां दधियुतान्नदानं वा अश्वदानं प्रेतवा-
हपुरे ॥ कान्तारमार्गदुःखौघवारणं कारणं मतम् ।
सम्पदां त्वां स्वभक्त्याहं दास्येऽन्नं दधिसंयुतम् ॥
अद्यतावत् पितुः ऊनसांवत्सरिके सप्तदशे अनाथस्वा-
स्थ्यकरं दध्यादियुतमन्नं (अश्वं) वा ददानि ॥ इति
दानप्रतिष्ठा ॥

